(५) आह्निकसूत्रावलि ३०-[illegible]

(६) ईषाद्यष्टोत्तरशतोपनिषद् (१११ उपनिषद् मूल) ४०-००

(७) दुर्गासप्तशती (गुटका मूल) ७-००

(८) सुन्दरकाण्डम् (वाल्मीकिरामायण मूल गुटका) ११-००

---

(१) सप्तवर्गी जन्म पत्रिका ३-००

(२) जन्म पत्रिका १-२५

(३) जन्माक्षर १-००

(४) एक पृष्ठीय जन्माक्षर प्रतिसौ० २८-००

(५) सम्पूर्णानन्द संस्कृत विश्वविद्यालय के लब्धांक एवं प्रमाण पत्रों की प्रतिलीपि ।

श्री स्वामी "प्रभुजी" महाराज
को श्रद्धापूर्ण समर्पण

[illegible]

२५।८।२५

# नम्र निवेदन

कर्मकाण्ड प्रयोगों में ( वाल्मीकि रामायण ) सुन्दरकाण्ड के पाठ का महत्व पूर्ण स्थान है।

नियमित पाठ की दृष्टि से सुविधा पूर्ण आकार "गुटका" में इस ग्रन्थ का प्रकाशन किया गया है। पाठ में फला-फल प्राप्ति के उद्देश्य से ग्रन्थ के आकार प्रकार का जितना महत्व होता है, उससे बहुत अधिक ग्रन्थ की शुद्धता का है। शुद्ध ग्रन्थों के प्रकाशन में "निर्णयसागर यन्त्रालय" बम्बई का अत्यन्त प्रतिष्ठित स्थान है।

अतः निर्णय सागर यन्त्रालय द्वारा मुद्रित "सुन्दरकाण्डम" को ही प्रस्तुत ग्रन्थ की मूल प्रति के हेतु चुना गया है।

विश्वास है कि अशुद्धि रहित इस ग्रन्थ से पाठक लाभान्वित होंगे।

—श्याम कुमार

श्रीरामचंद्राय नमः ॥ ततो रावणनीतायाः सीतायाः शत्रुकर्शनः ॥ इयेष पदमन्वेष्टुं चारणाचरिते पथि ॥१॥ दुष्करं निष्प्रतिद्वंद्वं चिकीर्षन्कर्म वानरः ॥ समुदग्रशिरोग्रीवो गवां पतिरिवाबभौ ॥ २ ॥ अथ वैदूर्यवर्णेषु शाड्वलेषु महाबलः ॥ धीरः सलिलकल्पेषु विचचार यथासुखम् ॥ ३ ॥ द्विजान्वित्रासयन्धीमानुरसा पादपान्हरन् ॥ मृगांश्च सुबहून्निघ्नन्प्रवृद्ध इव केसरी ॥ ४ ॥ नीललोहितमांजिष्ठपत्रवर्णैः सितासितैः ॥ स्वभावसिद्धैर्विमलैर्धातुभिः समलंकृतम् ॥ ५ ॥ कामरूपिभिराविष्टमभीक्ष्णं सपरिच्छदैः ॥ यक्षकिन्नरगंधर्वैर्देवकल्पैः सपन्नगैः ॥ ६ ॥ स तस्य गिरिवर्यस्य तले नागवरायुते ॥ तिष्ठन्कपिवरस्तत्र ह्रदे नाग इवाबभौ ॥ ७ ॥ स सूर्याय महेंद्राय पवनाय स्वयंभुवे ॥ भूतेभ्यश्चांजलिं कृत्वा चकार गमने मतिम् ॥ ८ ॥ अंजलिं प्राङ्मुखः कुर्वन् पवनायात्मयोनये ॥ ततो हि ववृधे गन्तुं दक्षिणो दक्षिणां दिशम् ॥ ९ ॥ प्लवगप्रवरैर्दृष्टः प्लवने कृतनिश्चयः ॥ ववृधे रामवृद्ध्यर्थं समुद्र इव पर्वसु ॥ १० ॥ निष्प्र-

माणशरीरः सँल्लिलंघयिषुरर्णवम् ॥ बाहुभ्यां पीडयामास चरणाभ्यां च पर्वतम् ॥ ११ ॥ स चचालाचलश्चाशु मुहूर्तं कपिपीडितः ॥ तरूणां पुष्पिताग्राणां सर्वं पुष्पमशातयत् ॥ १२ ॥ तेन पादपमुक्तेन पुष्पौघेण सुगंधिना ॥ सर्वतः संवृतः शैलो बभौ पुष्पमयो यथा ॥ १३ ॥ तेन चोत्तमवीर्येण पीड्यमानः स पर्वतः ॥ सलिलं संप्रसुस्राव मदमत्त इव द्विपः ॥ १४ ॥ पीड्यमानस्तु बलिना महेंद्रस्तेन पर्वतः ॥ रीतीर्निर्वर्तयामास कांचनांजनराजतीः ॥१५॥ मुमोच च शिलाः शैलो विशालाः समनःशिलाः ॥ मध्यमेनार्चिषा जुष्टो धूमराजिरिवानलः ॥ १६ ॥ हरिणा पीड्यमानेन पीड्यमानानि सर्वतः ॥ गुहाविष्टानि सत्त्वानि विनेदुर्विकृतैः स्वरैः ॥ १७ ॥ स महान्सत्त्वसंनादः शैलपीडानिमित्तजः ॥ पृथिवीं पूरयामास दिशश्चोपवनानि च ॥ १८ ॥ शिरोभिः पृथुभिर्नागा व्यक्तस्वस्तिकलक्षणैः ॥ वमंतः पावकं घोरं ददंशुर्दशनैः शिलाः ॥ १९ ॥ तास्तदा सविषैर्दष्टाः कुपितैस्तैर्महाशिलाः ॥ जज्वलुः पावकोद्दीप्ता बिभिदुश्च सहस्रधा

॥ २० ॥ यानि त्वौषधजालानि तस्मिञ्जातानि पर्वते ॥ विषघ्नान्यपि नागानां न शेकुः शमितुं विषम् ॥ २१ ॥ भिद्यतेऽयं गिरिर्भूतैरिति मत्वा तपस्विनः ॥ त्रस्ता विद्याधरास्तस्मादुत्पेतुः स्त्रीगणैः सह ॥ २२ ॥ पानभूमिगतं हित्वा हैममासनभाजनम् ॥ पात्राणि च महार्हाणि करकांश्च हिरण्मयान् ॥ २३ ॥ लेह्यानुच्चावचान्भक्ष्यान्मांसानि विविधानि च ॥ आर्षभाणि च चर्माणि खड्गांश्च कनकत्सरून् ॥ २४ ॥ कृतकंठगुणाः क्षीबा रक्तमाल्यानुलेपनाः ॥ रक्ताक्षाः पुष्कराक्षाश्च गगनं प्रतिपेदिरे ॥ २५ ॥ हारनूपुरकेयूरपारिहार्यधराः स्त्रियः ॥ विस्मिताः सस्मितास्तस्थुराकाशे रमणैः सह ॥ २६ ॥ दर्शयन्तो महाविद्यां विद्याधरमहर्षयः ॥ सहितास्तस्थुराकाशे वीक्षांचक्रुश्च पर्वतम् ॥२७॥ शुश्रुवुश्च तदा शब्दमृषीणां भावितात्मनाम् ॥ चारणानां च सिद्धानां स्थितानां विमलेऽम्बरे ॥ २८ ॥ एष पर्वतसंकाशो हनुमान्मारुतात्मजः ॥ तितीर्षति महावेगः समुद्रं वरुणालयम् ॥ २९ ॥ रामार्थं वानरार्थं च चिकीर्षन्कर्म दुष्करम् ॥ समु-

द्रस्य परं पारं दुष्प्रापं प्राप्तुमिच्छति ॥ ३० ॥ इति विद्याधरा वाचः श्रुत्वा तेषां तपस्विनाम् ॥ तमप्रमेयं ददृशुः पर्वते वानरर्षभम् ॥३१॥ दुधुवे च स रोमाणि चकंपे चाचलोपमः ॥ ननाद च महानादं सुमहानिव तोयदः ॥ ३२ ॥ आनुपूर्व्या च वृत्तं तल्लांगूलं लोमभिश्चितम् ॥ उत्पतिष्यन्विचिक्षेप पक्षिराज इवोरगम् ॥ ३३ ॥ तस्य लांगूलमाविद्धमतिवेगस्य पृष्ठतः ॥ ददृशे गरुडेनेव ह्रियमाणो महोरगः ॥ ३४ ॥ बाहू संस्तंभयामास महापरिघसन्निभौ ॥ आससाद कपिः कट्यां चरणौ संचुकोच च ॥ ३५ ॥ संहृत्य च भुजौ श्रीमाँस्तथैव च शिरोधराम् ॥ तेजः सत्त्वं तथा वीर्यमाविवेश स वीर्यवान् ॥ ३६ ॥ मार्गमालोकयन्दूरादूर्ध्वप्रणिहितेक्षणः ॥ रुरोध हृदये प्राणानाकाशमवलोकयन् ॥ ३७ ॥ पद्भ्यां दृढमवस्थानं कृत्वा स कपिकुंजरः ॥ निकुञ्च्य कर्णौ हनुमानुत्पतिष्यन्महाबलः ॥ वानरान्वानरश्रेष्ठ इदं वचनमब्रवीत् ॥ ३८ ॥ यथा राघवनिर्मुक्तः शरः श्वसनविक्रमः ॥ गच्छेत्तद्वद्गमिष्यामि लंकां रावणपालिताम् ॥३९॥ नहि

द्रक्ष्यामि यदि तां लंकायां जनकात्मजाम् ॥ अनेनैव हि वेगेन गमिष्यामि सुरालयम् ॥ ४० ॥ यदि वा त्रिदिवे सीतां न द्रक्ष्यामि कृतश्रमः ॥ बद्ध्वा राक्षसराजानमानयिष्यामि रावणम् ॥ ४१ ॥ सर्वथा कृतकार्योऽहमेष्यामि सह सीतया ॥ आनयिष्यामि वा लंकां समुत्पाट्य सरावणाम् ॥ ४२ ॥ एवमुक्त्वा तु हनुमान्वानरान्वानरर्षभः ॥ उत्पपाताथ वेगेन वेगवानविचारयन् ॥ ४३ ॥ सुपर्णमिव चात्मानं मेने स कपिकुंजरः ॥ ४४ ॥ समुत्पतति वेगात्तु वेगात्ते नगरोहिणः ॥ संहृत्य विटपान्सर्वान्समुत्पेतुः समंततः ॥ ४५ ॥ स मत्तकोयष्टिभकान् पादपान्पुष्पशालिनः ॥ उद्वहन्नुरुवेगेन जगाम विमलेऽम्बरे ॥४६॥ ऊरुवेगोत्थिता वृक्षा मुहूर्तं कपिमन्वयुः ॥ प्रस्थितं दीर्घमध्वानं स्वबंधुमिव बांधवाः ॥ ४७ ॥ तमूरुवेगोन्मथिताः सालाश्चान्ये नगोत्तमाः ॥ अनुजग्मुर्हनूमंतं सैन्या इव महीपतिम् ॥ ४८ ॥ सुपुष्पिताग्रैर्बहुभिः पादपैरन्वितः कपिः ॥ हनूमान्पर्वताकारो बभूवाद्भुतदर्शनः ॥ ४९ ॥ सारवंतोऽथ ये वृक्षा न्यमज्ज-

लवणांभसि ॥ भयादिव महेंद्रस्य पर्वता वरुणालये ॥ ५० ॥ स नानाकुसुमैः कीर्णः कपिः सांकुरकोरकैः ॥ शुशुभे मेघसंकाशः खद्योतैरिव पर्वतः ॥ ५१ ॥ विमुक्तास्तस्य वेगेन मुक्त्वा पुष्पाणि ते द्रुमाः ॥ व्यवशीर्यंत सलिले निवृत्ताः सुहृदो यथा ॥ ५२ ॥ लघुत्वेनोपपन्नं तद्विचित्रं सागरेऽपतत् ॥ द्रुमाणां विविधं पुष्पं कपिवायुसमीरितम् ॥ ५३ ॥ ताराशतमिवाकाशं प्रबभौ स महार्णवः ॥ ५४ ॥ पुष्पौघेणानुबद्धेन नानावर्णेन वानरः ॥ बभौ मेघ इवाकाशे विद्युद्गणविभूषितः ॥ ५५ ॥ तस्य वेगसमुद्भूतैः पुष्पैस्तोयमदृश्यत ॥ ताराभिरिव रामाभिरुदिताभिरिवांबरम् ॥ ५६ ॥ तस्यांबरगतौ बाहू ददृशाते प्रसारितौ ॥ पर्वताग्राद्विनिष्क्रांतौ पंचास्याविव पन्नगौ ॥ ५७ ॥ पिबन्निव बभौ चापि सोर्मिजालं महार्णवम् ॥ पिपासुरिव चाकाशं ददृशे स महाकपिः ॥ ५८ ॥ तस्य विद्युत्प्रभाकारे वायुमार्गानुसारिणः ॥ नयने विप्रकाशेते पर्वतस्थाविवानलौ ॥ ५९ ॥ पिंगे पिंगाक्षमुख्यस्य बृहती परिमंडले ॥ चक्षुषी संप्रकाशेते चंद्र-

सूर्याविव स्थितौ ॥ ६० ॥ मुखं नासिकया तस्य ताम्रया ताम्रमाबभौ ॥ संध्यया समभिस्पृष्टं यथा स्यात्सूर्यमंडलम् ॥ ६१ ॥ लांगूलं च समाविद्धं प्लवमानस्य शोभते ॥ अंबरे वायुपुत्रस्य शक्रध्वज इवोच्छ्रितम् ॥ ६२ ॥ लांगूलचक्रो हनुमाञ्शुक्लदंष्ट्रोऽनिलात्मजः ॥ व्यरोचत महाप्राज्ञः परिवेषीव भास्करः ॥ ६३ ॥ स्फिग्देशेनातिताम्रेण रराज स महाकपिः ॥ महता दारितेनेव गिरिर्गैरिकधातुना ॥ ६४ ॥ तस्य वानरसिंहस्य प्लवमानस्य सागरम् ॥ कक्षांतरगतो वायुर्जीमूत इव गर्जति ॥ ६५ ॥ खे यथा निपतत्युल्का उत्तरांताद्विनिःसृता ॥ दृश्यते सानुबंधा च तथा स कपिकुंजरः ॥ ६६ ॥ पतत्पतंगसंकाशो व्यायतः शुशुभे कपिः ॥ प्रवृद्ध इव मातंगः कक्ष्यया बध्यमानया ॥ ६७ ॥ उपरिष्टाच्छरीरेण छायया चावगाढया ॥ सागरे मारुताविष्टा नौरिवासीत्तदा कपिः ॥६८॥ यं यं देशं समुद्रस्य जगाम स महाकपिः ॥ स तु तस्यांगवेगेन सोन्माद इव लक्ष्यते ॥ ६९ ॥ सागरस्योर्मिजालानामुरसा शैलवर्ष्मणा ॥ अभिघ्नंस्तु महा-

वेगः पुप्लुवे स महाकपिः ॥ ७० ॥ कपिवातश्च बलवान्मेघवातश्च निर्गतः ॥ सागरं भीमनिर्ह्रादं कंपयामासतुर्भृशम् ॥ ७१ ॥ विकर्षन्नूर्मिजालानि बृहंति लवणांभसि ॥ पुप्लुवे कपिशार्दूलो विकिरन्निव रोदसी ॥ ७२ ॥ मेरुमंदरसंकाशानुद्गतान्स महार्णवे ॥ अत्यक्रामन्महावेगस्तरंगान्गणयन्निव ॥ ७३ ॥ तस्य वेगसमुद्धुष्टं जलं सजलदं तदा ॥ अंबरस्थं विबभ्राज शारदाभ्रमिवाततम् ॥ ७४ ॥ तिमिनक्रझषाः कूर्मा दृश्यंते विवृतास्तदा ॥ वस्त्रापकर्षणेनेव शरीराणि शरीरिणाम् ॥ ७५ ॥ क्रममाणं समीक्ष्याथ भुजगाः सागरालयाः ॥ व्योम्नि तं कपिशार्दूलं सुपर्णमिव मेनिरे ॥ ७६ ॥ दशयोजनविस्तीर्णा त्रिंशद्योजनमायता ॥ छाया वानरसिंहस्य जले चारुतराभवत् ॥ ७७ ॥ श्वेताभ्रघनराजीव वायुपुत्रानुगामिनी ॥ तस्य सा शुशुभे छाया पतिता लवणांभसि ॥ ७८ ॥ शुशुभे स महातेजा महाकायो महाकपिः ॥ वायुमार्गे निरालंबे पक्षवानिव पर्वतः ॥ ७९ ॥ येनासौ याति बलवान्वेगेन कपिकुंजरः ॥ तेन मार्गेण सहसा द्रोणीकृत इवा-

र्णवः ॥ ८० ॥ आपाते पक्षिसंघानां पक्षिराज इव व्रजन् ॥ हनूमान्मेघजालानि प्रकर्षन्मारुतो यथा ॥ ८१ ॥ प्रविशन्नभ्रजालानि निष्पतंश्च पुनःपुनः ॥ प्रच्छन्नश्च प्रकाशश्च चंद्रमा इव लक्ष्यते ॥ ८२ ॥ पांडुरारुणवर्णानि नीलमांजिष्ठकानि च ॥ कपिनाकृष्यमाणानि महाभ्राणि चकाशिरे ॥ ८३ ॥ प्लवमानं तु तं दृष्ट्वा प्लवंतं त्वरितं तदा ॥ ववृपुस्तत्र पुष्पाणि देवगंधर्वदानवाः ॥ ८४ ॥ ततापन हि तं सूर्यः प्लवगं वानरेश्वरम् ॥ सिषेवे च तदा वायू रामकार्यार्थसिद्धये ॥ ८५ ॥ ऋषयस्तुष्टुवुश्चैनं प्लवमानं विहायसा ॥ जगुश्च देवगंधर्वाः प्रशंसंतो वनौकसम् ॥ ८६ ॥ नागाश्च तुष्टुवुर्यक्षा रक्षांसि विबुधाः खगाः ॥ प्रेक्ष्य सर्वे कपिवरं सहसा विगतक्लमम् ॥ ८७ ॥ तस्मिन्प्लवगशार्दूले प्लवमाने हनूमति ॥ इक्ष्वाकुकुलमानार्थी चिंतयामास सागरः ॥ ८८ ॥ साहाय्यं वानरेंद्रस्य यदि नाहं हनूमतः ॥ करिष्यामि भविष्यामि सर्ववाच्यो विवक्षताम् ॥ ८९ ॥ अहमिक्ष्वाकुनाथेन सागरेण विवर्धितः ॥ इक्ष्वाकुसचिवश्चायं तन्नार्हत्यवसा-

दितुम् ॥ ९० ॥ तथा मया विधातव्यं विश्रमेत यथा कपिः ॥ शेषं च मयि विश्रांतः सुखेनातितरिष्यति ॥ ९१ ॥ इति कृत्वा मतिं साध्वीं समुद्रश्छन्नमंभसि ॥ हिरण्यनाभं मैनाकमुवाच गिरिसत्तमम् ॥ ९२ ॥ त्वमिहासुरसंघानां पातालतलवासिनाम् ॥ देवराज्ञा गिरिश्रेष्ठ परिघः सन्निवेशितः ॥ ९३ ॥ त्वमेषां ज्ञातवीर्याणां पुनरेवोत्पतिष्यताम् ॥ पातालस्याप्रमेयस्य द्वारमावृत्य तिष्ठसि ॥ ९४ ॥ तिर्यगूर्ध्वमधश्चैव शक्तिस्ते शैल वर्धितुम् ॥ तस्मात्संचोदयामि त्वामुत्तिष्ठ गिरिसत्तम ॥ ९५ ॥ स एष कपिशार्दूलस्त्वामुपर्येति वीर्यवान् ॥ हनूमान्रामकार्यार्थी भीमकर्मा खमाप्लुतः ॥ ९६ ॥ अस्य साह्यं मया कार्यमिक्ष्वाकुकुलवर्तिनः ॥ मम हीक्ष्वाकवः पूज्याः परं पूज्यतमास्तव ॥ ९७ ॥ कुरु साचिव्यमस्माकं न नः कार्यमतिक्रमेत् ॥ कर्तव्यमकृतं कार्यं सतां मन्युमुदीरयेत् ॥९८॥ सलिलादूर्ध्वमुत्तिष्ठ तिष्ठत्वेष कपिस्त्वयि ॥ अस्माकमतिथिश्चैव पूज्यश्च प्लवतां वरः ॥ ९९ ॥ चामीकरमहानाभ देवगंधर्वसेवित ॥ हनूमांस्त्वयि विश्रांतस्ततः

शेषं गमिष्यति ॥ स एष कपिशार्दूलस्त्वामुपैष्यति वीर्यवान् ॥ १०० ॥ काकुत्स्थस्यानृशंस्यं च मैथिल्याश्च विवासनम् ॥ श्रमं च प्लवगेंद्रस्य समीक्ष्योत्थातुमर्हसि ॥ १ ॥ हिरण्यगर्भो मैनाको निशम्य लवणांभसः ॥ उत्पपात जलात्तूर्णं महाद्रुमलतावृतः ॥ २ ॥ स सागरजलं भित्त्वा बभूवात्युच्छ्रितस्तदा ॥ यथा जलधरं भित्त्वा दीप्तरश्मिर्दिवाकरः ॥ ३ ॥ स महात्मा मुहूर्तेन पर्वतः सलिलावृतः ॥ दर्शयामास शृंगाणि सागरेण नियोजितः ॥ ४ ॥ शातकुंभमयैः शृंगैः सकिन्नरमहोरगैः ॥ आदित्योदयसंकाशैरुल्लिखद्भिरिवांबरम् ॥ ५ ॥ तस्य जांबूनदैः शृंगैः पर्वतस्य समुत्थितैः ॥ आकाशं शस्त्रसंकाशमभवत्कांचनप्रभम् ॥ ६ ॥ जातरूपमयैः शृंगैर्भ्राजमानैर्महाप्रभैः ॥ आदित्यशतसंकाशः सोऽभवद्गिरिसत्तमः ॥ ७ ॥ समुत्थितमसंगेन हनूमानग्रतः स्थितम् ॥ मध्ये लवणतोयस्य विघ्नोऽयमिति निश्चितः ॥ ८ ॥ स तमुच्छ्रितमत्यर्थं महावेगो महाकपिः ॥ उरसा पातयामास जीमूतमिव मारुतः ॥ ९ ॥ स तदा सादितस्तेन कपिना पर्वतो-

चमः ॥ बुद्ध्वा तस्य हरेर्वेगं जहर्ष च ननाद च ॥ ११० ॥ तमाकाशगतं वीर-माकाशे समुपस्थितः ॥ प्रीतो हृष्टमना वाक्यमब्रवीत्पर्वतः कपिम् ॥ मानुषं धारयन्रूपमात्मनः शिखरे स्थितः ॥ ११ ॥ दुष्करं कृतवान्कर्म त्वमिदं वानरो-त्तम ॥ निपत्य मम शृंगेषु सुखं विश्रम्य गम्यताम् ॥ १२ ॥ राघवस्य कुले जातैरुदधिः परिवर्धितः ॥ स त्वां रामहिते युक्तं प्रत्यर्चयति सागरः ॥ १३ ॥ कृते च प्रतिकर्तव्यमेष धर्मः सनातनः ॥ सोऽयं तत्प्रतिकारार्थी त्वत्तः संमान-मर्हति ॥ १४ ॥ तिष्ठ त्वं हरिशार्दूल मयि विश्रम्य गम्यताम् ॥ त्वन्निमित्तमने-नाहं बहुमानात्प्रचोदितः ॥ १५ ॥ योजनानां शतं चापि कपिरेष खमाप्लुतः ॥ तव सानुषु विश्रांतः शेषं प्रक्रमतामिति ॥ १६ ॥ तदिदं गंधवत्स्वादु कंदमूल-फलं बहु ॥ तदास्वाद्य हरिश्रेष्ठ विश्रांतोऽथ गमिष्यसि ॥ १७ ॥ अस्माकमपि संबंधः कपिमुख्य त्वयास्ति वै ॥ प्रख्यातस्त्रिषु लोकेषु महागुणपरिग्रहः ॥ १८ ॥ वेगवंतः प्लवंतो ये प्लवगा मारुतात्मज ॥ तेषां मुख्यतमं मन्ये त्वामहं कपि-

कुंजर ॥ १९ ॥ अतिथिः किल पूजार्हः प्राकृतोऽपि विजानता ॥ धर्मं जिज्ञासमानेन किं पुनर्यादृशो भवान् ॥ १२० ॥ त्वं हि देववरिष्ठस्य मारुतस्य महात्मनः ॥ पुत्रस्तस्यैव वेगेन सदृशः कपिकुंजर ॥ २१ ॥ पूजिते त्वयि धर्मज्ञे पूजां प्राप्नोति मारुतः ॥ तस्मात्त्वं पूजनीयो मे शृणु चाप्यत्र कारणम् ॥ २२ ॥ पूर्वं कृतयुगे तात पर्वताः पक्षिणोऽभवन् ॥ तेऽपि जग्मुर्दिशः सर्वा गरुडा इव वेगिनः ॥ २३ ॥ ततस्तेषु प्रयातेषु देवसंघाः सहर्षिभिः ॥ भूतानि च भयं जग्मुस्तेषां पतनशंकया ॥२४॥ ततः क्रुद्धः सहस्राक्षः पर्वतानां शतक्रतुः ॥ पक्षांश्चिच्छेद वज्रेण ततः शतसहस्रशः ॥२५॥ स मामुपगतः क्रुद्धो वज्रमुद्यम्य देवराट् ॥ ततोऽहं सहसा क्षिप्तः श्वसनेन महात्मना ॥ २६ ॥ अस्मिँल्लवणतोये च प्रक्षिप्तः प्लवगोत्तम ॥ गुप्तपक्षः समग्रश्च तव पित्राभिरक्षितः ॥ २७ ॥ ततोऽहं मानयामि त्वां मान्यो हि मम मारुते ॥ त्वया ममैष संबंधः कपिमुख्य महागुणः ॥ २८ ॥ अस्मिन्नेवंगते कार्ये सागरस्य ममैव च प्रीतिं प्रीतमनाः कर्तुं

त्वमर्हसि महामते ॥ २९ ॥ श्रमं मोक्षय पूजां च गृहाण हरिसत्तम ॥ प्रीतिं च मम मान्यस्य प्रीतोऽस्मि तव दर्शनात् ॥ १३० ॥ एवमुक्तः कपिश्रेष्ठस्तं नगोत्तममब्रवीत् ॥ प्रीतोऽस्मि कृतमातिथ्यं मन्युरेषोऽपनीयताम् ॥ ३१ ॥ त्वरते कार्यकालो मे अहश्चाप्यतिवर्तते ॥ प्रतिज्ञा च मया दत्ता न स्थातव्यमिहांतरा ॥ ३२ ॥ इत्युक्त्वा पाणिना शैलमालभ्य हरिपुंगवः ॥ जगामाकाशमाविश्य वीर्यवान्प्रहसन्निव ॥ ३३ ॥ स पर्वतसमुद्राभ्यां बहुमानादवेक्षितः ॥ पूजितश्चोपपन्नाभिराशीर्भिरभिनंदितः ॥३४॥ अथोर्ध्वं दूरमाप्लुत्य हित्वा शैलमहार्णवौ ॥ पितुः पंथानमासाद्य जगाम विमलेंऽबरे ॥ ३५ ॥ भूयश्चोर्ध्वगतिं प्राप्य गिरिं तमवलोकयन् ॥ वायुसूनुर्निरालंबो जगाम विमलेंऽबरे ॥ ३६ ॥ तद्द्वितीयं हनुमतो दृष्ट्वा कर्म सुदुष्करम् ॥ प्रशशंसुः सुराः सर्वे सिद्धाश्च परमर्षयः ॥ ३७ ॥ देवताश्चाभवन्हृष्टास्तत्रस्थास्तस्य कर्मणा ॥ कांचनस्य सुनाभस्य सहस्राक्षश्च वासवः ॥ ३८ ॥ उवाच वचनं धीमान्परितोषात्सगद्गदम् ॥ सुनाभं पर्वतश्रेष्ठं

स्वयमेव शचीपतिः ॥३९॥ हिरण्यनाभ शैलेन्द्र परितुष्टोऽस्मि ते भृशम् ॥ अभयं ते प्रयच्छामि गच्छ सौम्य यथासुखम् ॥ १४० ॥ साह्यं कृतं ते सुमहद्विक्रांतस्य हनूमतः ॥ क्रमतो योजनशतं निर्भयस्य भये सति ॥ ४१ ॥ रामस्यैष हितायैव याति दाशरथेः कपिः ॥ सत्क्रियां कुर्वता शक्त्या तोषितोऽस्मि दृढं त्वया ॥४२॥ ततः प्रहर्षमलभद्विपुलं पर्वतोत्तमः ॥ देवतानां पतिं दृष्ट्वा परितुष्टं शत-क्रतुम् ॥ ४३ ॥ स वै दत्तवरः शैलो बभूवावस्थितस्तदा ॥ हनूमांश्च मुहूर्तेन व्यतिचक्राम सागरम् ॥४४॥ ततो देवाः सगंधर्वाः सिद्धाश्च परमर्षयः ॥ अब्रु-वन्सूर्यसंकाशां सुरसां नागमातरम् ॥ ४५ ॥ अयं वातात्मजः श्रीमान्प्लवते सागरोपरि ॥ हनूमान्नाम तस्य त्वं मुहूर्तं विघ्नमाचर ॥ ४६ ॥ राक्षसं रूपमा-स्थाय सुघोरं पर्वतोपमम् ॥ दंष्ट्राकरालं पिंगाक्षं वक्त्रं कृत्वा नभःस्पृशम् ॥४७॥ बलमिच्छामहे ज्ञातुं भूयश्चास्य पराक्रमम् ॥ त्वां विजेष्यत्युपायेन विषादं वा गमिष्यति ॥ ४८ ॥ एवमुक्ता तु सा देवी दैवतैरभिसत्कृता ॥ समुद्रमध्ये

सुरसा बिभ्रती राक्षसं वपुः॥४९॥ विकृतं च विरूपं च सर्वस्य च भयावहम्॥ प्लवमानं हनूमंतमावृत्येदमुवाच ह॥१५०॥ मम भक्ष्यः प्रदिष्टस्त्वमीश्वरैर्वानरर्षभ॥ अहं त्वां भक्षयिष्यामि प्रविशेदं ममाननम्॥५१॥ एवमुक्तः सुरसया प्रांजलिर्वानरर्षभः॥ प्रहृष्टवदनः श्रीमानिदं वचनमब्रवीत्॥५२॥ रामो दाशरथिर्नाम प्रविष्टो दंडकावनम्॥ लक्ष्मणेन सह भ्रात्रा वैदेह्या चापि भार्यया॥५३॥ अन्यकार्यविषक्तस्य बद्धवैरस्य राक्षसैः॥ तस्य सीता हृता भार्या रावणेन यशस्विनी॥५४॥ तस्याः सकाशं दूतोऽहं गमिष्ये रामशासनात्॥ कर्तुमर्हसि रामस्य साह्यं विषयवासिनि॥५५॥ अथवा मैथिलीं दृष्ट्वा रामं चाक्लिष्टकारिणम्॥ आगमिष्यामि ते वक्त्रं सत्यं प्रतिशृणोमि ते॥५६॥ एवमुक्ता हनुमता सुरसा कामरूपिणी॥ अब्रवीन्नातिवर्तेन्मां कश्चिदेष वरो मम॥५७॥ तं प्रयान्तं समुद्वीक्ष्य सुरसा वाक्यमब्रवीत्॥ बलं जिज्ञासमाना सा नागमाता हनूमतः॥५८॥ निविश्य वदनं मेऽद्य गन्तव्यं वानरोत्तम॥ वर

एष पुरा दत्तो मम धात्रेति सत्वरा ॥ व्यादाय विपुलं वक्रं स्थिता सा मारुतेः पुरः ॥ ५९ ॥ एवमुक्तः सुरसया क्रुद्धो वानरपुंगवः ॥ अब्रवीत्कुरु वै वक्रं येन मां विषहिष्यसे ॥ १६० ॥ इत्युक्त्वा सुरसां क्रुद्धो दशयोजनमायतः ॥ दशयोजनविस्तारो हनुमानभवत्तदा ॥ ६१ ॥ तं दृष्ट्वा मेघसंकाशं दशयोजनमायतम् ॥ चकार सुरसाप्यास्यं विंशद्योजनमायतम् ॥ ६२ ॥ तां दृष्ट्वा व्यादितास्यां तु वायुपुत्रः सुबुद्धिमान् ॥ दीर्घजिह्वं सुरसया सुभीमं नरकोपमम् ॥ ६३ ॥ (तं दृष्ट्वा मेघसंकाशं विंशद्योजनमायतम् ॥ हनुमांस्तु ततः क्रुद्धस्त्रिंशद्योजनमायतः ॥ ६४ ॥ चकार सुरसा वक्रं चत्वारिंशत्तथोच्छ्रितम् ॥ बभूव हनुमान्वीरः पंचाशद्योजनोच्छ्रितः ॥ ६५ ॥ चकार सुरसा वक्रं षष्टियोजनमुच्छ्रितम् ॥ तदैव हनुमान्वीरः सप्ततीयोजनोच्छ्रितः ॥ ६६ ॥ चकार सुरसा वक्रमशीतीयोजनायतम् ॥ हनूमानचलप्रख्यो नवतीयोजनोच्छ्रितः ॥ ६७ ॥ चकार सुरसा वक्रं शतयोजनमायतम् ॥) स संक्षिप्यात्मनः कायं जीमूत इव मारुतिः ॥

तस्मिन्मुहूर्ते हनुमान्बभूवांगुष्ठमात्रकः ॥ ६८ ॥ सोऽभिपद्याथ तद्वक्त्रं निष्पत्य च महाबलः ॥ अन्तरिक्षे स्थितः श्रीमानिदं वचनमब्रवीत् ॥६९॥ प्रविष्टोऽस्मि हि ते वक्त्रं दाक्षायणि नमोऽस्तु ते ॥ गमिष्ये यत्र वैदेही सत्यश्चासीद्वरस्तव ॥ १७० ॥ तं दृष्ट्वा वदनान्मुक्तं चंद्रं राहुमुखादिव ॥ अब्रवीत्सुरसा देवी स्वेन रूपेण वानरम् ॥७१॥ अर्थसिद्ध्यै हरिश्रेष्ठ गच्छ सौम्य यथासुखम् ॥ समानय च वैदेहीं राघवेण महात्मना ॥७२॥ तत्तृतीयं हनुमतो दृष्ट्वा कर्म सुदुष्करम् ॥ साधु साध्विति भूतानि प्रशशंसुस्तदा हरिम् ॥ ७३ ॥ स सागरमनाधृष्यमभ्येत्य वरुणालयम् ॥ जगामाकाशमाविश्य वेगेन गरुडोपमः ॥ ७४ ॥ सेविते वारिधाराभिः पतगैश्च निषेविते ॥ चरिते कैशिकाचार्यैरैरावतनिषेविते ॥७५॥ सिंहकुंजरशार्दूलपतगोरगवाहनैः ॥ विमानैः संपतद्भिश्च विमलैः समलंकृते ॥७६॥ वज्राशनिसमाघातैः पावकैरिव शोभिते ॥ कृतपुण्यैर्महाभागैः स्वर्गजिद्भिरधिष्ठिते ॥ ७७ ॥ वहता हव्यमत्यंतं सेविते चित्रभानुना ॥ ग्रहनक्षत्रचंद्रार्क-

तारागणविभूषिते ॥ ७८ ॥ महर्षिगणगंधर्वनागयक्षसमाकुले ॥ विविक्ते विमले विश्वे विश्वावसुनिषेविते ॥ ७९ ॥ देवराजगजाक्रांते चंद्रसूर्यपथे शिवे ॥ विताने जीवलोकस्य विमले ब्रह्मनिर्मिते ॥ १८० ॥ बहुशः सेविते वीरैर्विद्याधरगणैर्वरैः ॥ जगाम वायुमार्गं च गरुत्मानिव मारुतिः ॥ ८१ ॥ हनूमान्मेघजालानि प्राकर्षन्मारुतो यथा ॥ ८२ ॥ कालागुरुसवर्णानि रक्तपीतसितानि च ॥ कपिना कृष्यमाणानि महाभ्राणि चकाशिरे ॥ ८३ ॥ प्रविशन्नभ्रजालानि निष्पतंश्च पुनः पुनः ॥ प्रावृषींदुरिवाभाति निष्पतन्प्रविशंस्तथा ॥ ८४ ॥ प्रदृश्यमानः सर्वत्र हनुमान्मारुतात्मजः ॥ भेजेऽम्बरं निरालंबं पक्षयुक्त इवाद्रिराट् ॥ ८५ ॥ प्लवमानं तु तं दृष्ट्वा सिंहिका नाम राक्षसी ॥ मनसा चिंतयामास प्रवृद्धा कामरूपिणी ॥ ८६ ॥ अद्य दीर्घस्य कालस्य भविष्याम्यहमाशिता ॥ इदं मम महासत्त्वं चिरस्य वशमागतम् ॥ ८७ ॥ इति संचिंत्य मनसा छायामस्य समाक्षिपत् ॥ छायायां गृह्यमाणायां चिंतयामास वानरः ॥ ८८ ॥ समा-

क्षिप्तोऽस्मि सहसा पंगूकृतपराक्रमः ॥ प्रतिलोमेन वातेन महानौरिव सागरे ॥ ८९ ॥ तिर्यगूर्ध्वमधश्चैव वीक्षमाणस्तदा कपिः ॥ ददर्श स महासत्त्वमुत्थितं लवणांभसि ॥ १९० ॥ तद्दृष्ट्वा चिंतयामास मारुतिर्विकृताननाम् ॥ कपिराज्ञा यथाख्यातं सत्त्वमद्भुतदर्शनम् ॥ छायाग्राहि महावीर्यं तदिदं नात्र संशयः ॥९१॥ स तां बुद्ध्वार्थतत्त्वेन सिंहिकां मतिमान्कपिः ॥ व्यवर्धत महाकायः प्रावृषीव बलाहकः ॥ ९२ ॥ तस्य सा कायमुद्वीक्ष्य वर्धमानं महाकपेः ॥ वक्त्रं प्रसारयामास पातालांबरसन्निभम् ॥९३॥ घनराजीव गर्जंती वानरं समभिद्रवत् ॥९४॥ स ददर्श ततस्तस्या विकृतं सुमहन्मुखम् ॥ कायमात्रं च मेधावी मर्माणि च महाकपिः ॥ ९५ ॥ स तस्या विकृते वक्त्रे वज्रसंहननः कपिः ॥ संक्षिप्य मुहुरात्मानं निपपात महाकपिः ॥९६॥ आस्ये तस्या निमज्जंतं ददृशुः सिद्धचारणाः ॥ ग्रस्यमानं यथा चंद्रं पूर्णं पर्वणि राहुणा ॥ ९७ ॥ ततस्तस्या नखैस्तीक्ष्णैर्मर्माण्युत्कृत्य वानरः ॥ उत्पपाताथ वेगेन मनःसंपातविक्रमः ॥ ९८ ॥ तां तु दृष्ट्वा स

घृत्वा च दाक्षिण्येन निपात्य सः ॥ कपिप्रवीरो वेगेन ववृधे पुनरात्मवान् ॥ ९९ ॥ हृतहृत्सा हनुमता पपात विधुरांभसि ॥ स्वयंभुवेव हनुमान्सृष्टस्तस्या निपातने ॥ २०० ॥ तां हतां वानरेणाशु पतितां वीक्ष्य सिंहिकाम् ॥ भूतान्याकाशचारीणि तमूचुः प्लवगोत्तमम् ॥ १ ॥ भीममद्य कृतं कर्म महत्सत्त्वं त्वया हतम् ॥ साधयार्थमभिप्रेतमरिष्टं गच्छ मारुते ॥ २ ॥ यस्य त्वेतानि चत्वारि वानरेंद्र यथा तव ॥ धृतिर्दृष्टिर्मतिर्दाक्ष्यं स कर्मसु न सीदति ॥ ३ ॥ स तैः संपूजितः पूज्यः प्रतिपन्नप्रयोजनैः ॥ जगामाकाशमाविश्य पन्नगाशनवत्कपिः ॥ ४ ॥ प्राप्तभूयिष्ठपारस्तु सर्वतः परिलोकयन् ॥ योजनानां शतस्यांते वनराजिं ददर्श सः ॥ ५ ॥ ददर्श च पतन्नेव विविधद्रुमभूषितम् ॥ द्वीपं शाखामृगश्रेष्ठो मलयोपवनानि च ॥ ६ ॥ सागरं सागरानूपं सागरानूपजान्द्रुमान् ॥ सागरस्य च पत्नीनां मुखान्यपि विलोकयत् ॥७॥ स महामेघसंकाशं समीक्ष्यात्मानमात्मवान् ॥ निरुंधंतमिवाकाशं चकार मतिमान्मतिम् ॥ ८ ॥ कायवृद्धिं प्रवेगं च

मम दृष्ट्वैव राक्षसाः ॥ मयि कौतूहलं कुर्युरिति मेने महामतिः ॥ ९ ॥ ततः शरीरं संक्षिप्य तन्महीधरसंनिभम् ॥ पुनः प्रकृतिमापेदे वीतमोह इवात्मवान् ॥ २१० ॥ तद्रूपमतिसंक्षिप्य हनुमान्प्रकृतौ स्थितः ॥ त्रीन्क्रमानिव विक्रम्य बलिवीर्यहरो हरिः ॥ ११ ॥ स चारुनानाविधरूपधारी परं समासाद्य समुद्रतीरम् ॥ परैरशक्यं प्रतिपन्नरूपः समीक्षितात्मा समवेक्षितार्थः ॥ १२ ॥ ततः स लंबस्य गिरेः समृद्धे विचित्रकूटे निपपात कूटे ॥ सकेतकोद्दालकनारिकेले महाद्रिकूटप्रतिमो महात्मा ॥ १३ ॥ ततस्तु संप्राप्य समुद्रतीरं समीक्ष्य लंकां गिरिवर्यमूर्ध्नि ॥ कपिस्तु तस्मिन्निपपात पर्वते विधूय रूपं व्यथयन्मृगद्विजान् ॥ १४ ॥ स सागरं दानवपन्नगायुतं बलेन विक्रम्य महोर्मिमालिनम् ॥ निपत्य तीरे च महोदधेस्तदा ददर्श लंकाममरावतीमिव ॥२१५॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुंदरकांडे प्रथमः सर्गः ॥ १ ॥

## द्वितीयः सर्गः २

स सागरमनाधृष्यमतिक्रम्य महाबलः ॥ त्रिकूटस्य तटे लंकां स्थितः स्वस्थो ददर्श ह ॥ १ ॥ ततः पादपमुक्तेन पुष्पवर्षेण वीर्यवान् ॥ अभिवृष्टस्ततस्तत्र बभौ पुष्पमयो हरिः ॥ २ ॥ योजनानां शतं श्रीमांस्तीर्त्वाप्युत्तमविक्रमः ॥ अनिःश्वसन्कपिस्तत्र न ग्लानिमधिगच्छति ॥ ३ ॥ शतान्यहं योजनानां क्रमेयं सुबहून्यपि। किं पुनः सागरस्यांतं संख्यातं शतयोजनम् ॥ ४ ॥ स तु वीर्यवतां श्रेष्ठः प्लवतामपि चोत्तमः ॥ जगाम वेगवाँल्लंकां लंघयित्वा महोदधिम् ॥ ५ ॥ शाद्वलानि च नीलानि गंधवंति वनानि च ॥ मधुमंति च मध्येन जगाम नगवंति च ॥ ६ ॥ शैलांश्च तरुसंछन्नान्वनराजीश्च पुष्पिताः ॥ अभिचक्राम तेजस्वी हनूमान्प्लवगर्षभः ॥ ७ ॥ स तस्मिन्नचले तिष्ठन्वनान्युपवनानि च ॥ स नगाग्रे स्थितां लंकां ददर्श पवनात्मजः ॥ ८ ॥ सरलान्कर्णिकारांश्च खर्जूरांश्च सुपुष्पितान् ॥ प्रियालान्मुचुलिंदांश्च कुटजान्केतकानपि ॥९॥ प्रियंगून्गंधपूर्णांश्च नीपा-

न्सप्तच्छदांस्तथा ॥ आसनान्कोविदारांश्च करवीरांश्च पुष्पितान् ॥ १० ॥ पुष्पभारनिबद्धांश्च तथा मुकुलितानपि ॥ पादपान्विहगाकीर्णान्पवनाधूतमस्तकान् ॥ ११ ॥ हंसकारंडवाकीर्णा वापीः पद्मोत्पलावृताः ॥ आक्रीडान्विविधारम्यान्विविधांश्च जलाशयान् ॥१२॥ सन्ततान्विविधैर्वृक्षैः सर्वर्तुफलपुष्पितैः ॥ उद्यानानि च रम्याणि ददर्श कपिकुंजरः ॥ १३ ॥ समासाद्य च लक्ष्मीवाँल्लंकां रावणपालिताम् ॥ परिघाभिः सपद्माभिः सोत्पलाभिरलंकृताम् ॥ १४ ॥ सीतापहरणात्तेन रावणेन सुरक्षिताम् ॥ समंताद्विचरद्भिश्च राक्षसैरुग्रधन्विभिः ॥ १५ ॥ कांचनेनावृतां रम्यां प्राकारेण महापुरीम् ॥ गृहैश्च गिरिसंकाशैः शारदांबुदसंनिभैः ॥ १६ ॥ पांडुराभिः प्रतोलीभिरुच्चाभिरभिसंवृताम् ॥ अट्टालकशताकीर्णां पताकाध्वजशोभिताम् ॥ १७ ॥ तोरणैः कांचनैर्दिव्यैर्लतापंक्तिविराजितैः ॥ ददर्श हनुमाँल्लंकां दिवि देवपुरीमिव ॥ १८ ॥ गिरिमूर्ध्नि स्थितां लंकां पांडुरैर्भवनैः शुभैः ॥ ददर्श स कपिः श्रीमान्पुरमाकाशगामिव

॥ १९ ॥ पालितां राक्षसेंद्रेण निर्मितां विश्वकर्मणा ॥ प्लवमानामिवाकाशे ददर्श हनुमान्पुरीम् ॥ २० ॥ वप्रप्राकारजघनां विपुलांबुनवांबराम् ॥ शतघ्नीशूलकेशांतामट्टालकवतंसकाम् ॥ मनसेव कृतां लंकां निर्मितां विश्वकर्मणा ॥ २१ ॥ द्वारमुत्तरमासाद्य चिंतयामास वानरः ॥ २२ ॥ कैलासनिलयप्रख्यमालिखंतमिवांबरम् ॥ ध्रियमाणमिवाकाशमुच्छ्रितैर्भवनोत्तमैः ॥२३॥ संपूर्णां राक्षसैर्घोरैर्नागैर्भोगवतीमिव ॥ अचिंत्यां सुकृतस्पष्टां कुबेराध्युषितां पुरा ॥२४॥ दंष्ट्रिभिर्बहुभिः शूरैः शूलपट्टिशपाणिभिः ॥ रक्षितां राक्षसैर्घोरैर्गुहामाशीविषैरिव ॥२५॥ तस्याश्च महतीं गुप्तिं सागरं च निरीक्ष्य सः ॥ रावणं च रिपुं घोरं चिंतयामास वानरः ॥ २६ ॥ आगत्यापीह हरयो भविष्यंति निरर्थकाः ॥ नहि युद्धेन वै लंका शक्या जेतुं सुरैरपि ॥ २७ ॥ इमां त्वविषमां लंकां दुर्गां रावणपालिताम् ॥ प्राप्यापि सुमहाबाहुः किं करिष्यति राघवः ॥ २८ ॥ अवकाशो न साम्नस्तु राक्षसेष्वभिगम्यते ॥ न दानस्य न भेदस्य नैव युद्धस्य दृश्यते ॥ २९ ॥

चतुर्णामेव हि गतिर्वानराणां तरस्विनाम् ॥ वालिपुत्रस्य नीलस्य मम राज्ञश्च धीमतः ॥ ३० ॥ यावज्जानामि वैदेहीं यदि जीवति वा न वा ॥ तत्रैव चिंतयिष्यामि दृष्ट्वा तां जनकात्मजाम् ॥३१॥ ततः स चिंतयामास मुहूर्तं कपिकुंजरः ॥ गिरिशृंगे स्थितस्तस्मिन्रामस्याभ्युदये रतः ॥३२॥ अनेन रूपेण मया न शक्या रक्षसां पुरी ॥ प्रवेष्टुं राक्षसैर्गुप्ता क्रूरैर्बलसमन्वितैः ॥३३॥ महौजसो महावीर्या बलवंतश्च राक्षसाः ॥ वंचनीया मया सर्वे जानकीं परिमार्गता ॥ ३४ ॥ लक्ष्यालक्ष्येण रूपेण रात्रौ लंकापुरी मया ॥ प्राप्तकालं प्रवेष्टुं मे कृत्यं साधयितुं महत् । ३५ ॥ तां पुरीं तादृशीं दृष्ट्वा दुराधर्षां सुरासुरैः ॥ हनुमांश्चिंतयामास विनिःश्वस्य मुहुर्मुहुः ॥ ३६ ॥ केनोपायेन पश्येयं मैथिलीं जनकात्मजाम् ॥ अदृष्टो राक्षसेंद्रेण रावणेन दुरात्मना ॥ ३७ ॥ न विनश्येत्कथं कार्यं रामस्य विदितात्मनः ॥ एकामेकस्तु पश्येयं रहिते जनकात्मजाम् ॥३८॥ भूताश्चार्था विनश्यंति देशकालविरोधिताः ॥ विक्लवं दूतमासाद्य तमः सूर्योदये यथा ॥३९॥ अर्था-

नर्थान्तरे बुद्धिर्निश्चितापि न शोभते ॥ घातयंति हि कार्याणि दूताः पंडितमानिनः ॥ ४० ॥ न विनश्येत्कथं कार्यं वैक्लव्यं न कथं भवेत् ॥ लंघनं च समुद्रस्य कथं नु न भवेद्वृथा ॥ ४१ ॥ मयि दृष्टे तु रक्षोभी रामस्य विदितात्मनः ॥ भवेद्व्यर्थमिदं कार्यं रावणानर्थमिच्छतः ॥ ४२ ॥ नहि शक्यं क्वचित्स्थातुमविज्ञातेन राक्षसैः ॥ अपि राक्षसरूपेण किमुतान्येन केनचित् ॥४३॥ वायुरप्यत्र नाज्ञातश्चरेदिति मतिर्मम ॥ न ह्यत्राविदितं किंचिद्रक्षसां भीमकर्मणाम् ॥ ४४ ॥ इहाहं यदि तिष्ठामि स्वेन रूपेण संवृतः ॥ विनाशमुपयास्यामि भर्तुरर्थश्च हास्यति ॥ ४५ ॥ तदहं स्वेन रूपेण रजन्यां ह्रस्वतां गतः॥ लंकामभिपतिष्यामि राघवस्यार्थसिद्धये ॥ ४६ ॥ रावणस्य पुरीं रात्रौ प्रविश्य सुदुरासदाम् ॥ विचिन्वन्भवनं सर्वं द्रक्ष्यामि जनकात्मजाम् ॥ ४७ ॥ इति निश्चित्य हनुमान्सूर्यस्यास्तमयं कपिः ॥ आचकांक्षे तदा वीरो वैदेह्या दर्शनोत्सुकः ॥४८॥ सूर्ये चास्तं गते रात्रौ देहं संक्षिप्य मारुतिः ॥ वृषदंशकमात्रोऽथ बभूवाद्भुतदर्शनः ॥४९॥ प्रदोषकाले हनुमांस्तूर्णमुत्प्लुत्य वीर्यवान् ॥ प्रविवेश पुरीं रम्यां प्रविभक्तमहा-

पथाम् ॥ ५० ॥ प्रासादमालावितता स्तंभैः कांचनसंनिभैः ॥ शातकुंभनिभैर्जालैर्गंधर्वनगरोपमाम् ॥ ५१ ॥ सप्तभौमाष्टभौमैश्च स ददर्श महापुरीम् ॥ तलैः स्फाटिकसंकीर्णैः कार्तस्वरविभूषितैः ॥ ५२ ॥ वैदूर्यमणिचित्रैश्च मुक्ताजालविराजितैः ॥ तैस्तैः शुशुभिरे तानि भवनान्यत्र रक्षसाम् ॥५३ ॥ कांचनानि विचित्राणि तोरणानि च रक्षसाम् ॥ लंकामुद्योतयामासुः सर्वतः समलंकृताम् ॥ ५४ ॥ अचिंत्यामद्भुताकारां दृष्ट्वा लंकां महाकपिः ॥ आसीद्विषण्णो हृष्टश्च वैदेह्या दर्शनोत्सुकः ॥५५॥ स पांडुराविद्धविमानमालिनीं महार्हजांबूनदजालतोरणाम् ॥ यशस्विनीं रावणबाहुपालितां क्षपाचरैर्भीमबलैः सुपालिताम् ॥५६॥ चन्द्रोऽपि साचिव्यमिवास्य कुर्वंस्तारागणैर्मध्यगतो विराजन् ॥ ज्योत्स्नावितानेन वितत्य लोकानुत्तिष्ठतेऽनेकसहस्ररश्मिः ॥ ५७ ॥ शंखप्रभं क्षीरमृणालवर्णमुद्गच्छमानं व्यवभासमानम् ॥ ददर्श चंद्रं स कपिप्रवीरः पोप्लूयमानं सरसीव हंसम् ॥ ५८ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुंदरकांडे द्वितीयः सर्गः ॥ २ ॥

## तृतीयः सर्गः ३

स लंबशिखरे लंबे लंबतोयदसंनिभे ॥ सत्त्वमास्थाय मेधावी हनूमान्मारुतात्मजः ॥ १ ॥ निशि लंकां महासत्त्वो विवेश कपिकुंजरः ॥ रम्यकाननतोयाढ्यां पुरीं रावणपालिताम् ॥ २ ॥ शारदांबुधरप्रख्यैर्भवनैरुपशोभिताम् ॥ सागरोपमनिर्घोषां सागरानिलसेविताम् ॥ ३ ॥ सुपुष्टबलसंगुप्तां यथैव विटपावतीम् ॥ चारुतोरणनिर्यूहां पांडुरद्वारतोरणाम् ॥ ४ ॥ भुजगाचरितां गुप्तां शुभां भोगवतीमिव ॥ तां सविद्युद्घनाकीर्णां ज्योतिर्गणनिषेविताम् ॥ ५ ॥ चंडमारुतनिर्ह्रादां यथा चाप्यमरावतीम् ॥ शातकुंभेन महता प्राकारेणाभिसंवृताम् ॥६॥ किंकिणीजालघोषाभिः पताकाभिरलंकृताम् ॥ आसाद्य सहसा हृष्टः प्राकारमभिपेदिवान् ॥ ७ ॥ विस्मयाविष्टहृदयः पुरीमालोक्य सर्वतः ॥ जांबूनदमयैर्द्वारैर्वैदूर्यकृतवेदिकैः॥८॥ वज्रस्फटिकमुक्ताभिर्मणिकुट्टिमभूषितैः ॥ तप्तहाटकनिर्यूहै राजतामलपांडुरैः ॥ ९ ॥ वैदूर्यकृतसोपानैः स्फटिकांतर-

पांसुभिः ॥ चारुसंजवनापेतैः खमिवोत्पतितैः शुभैः ॥ १० ॥ क्रौंचबर्हिणसंघुष्टै राजहंसनिषेवितैः ॥ तूर्याभरणनिर्घोषैः सर्वतः परिनादिताम् ॥ ११ ॥ वस्वोकसारप्रतिमां समीक्ष्य नगरीं ततः ॥ खमिवोत्पतितां लंकां जहर्ष हनुमान्कपिः ॥ १२ ॥ तां समीक्ष्य पुरीं लंकां राक्षसाधिपतेः शुभाम् ॥ अनुत्तमामृद्धिमतीं चिंतयामास वीर्यवान् ॥ १३ ॥ नेयमन्येन नगरी शक्या धर्षयितुं बलात् ॥ रक्षिता रावणबलैरुद्यतायुधपाणिभिः ॥ १४ ॥ कुमुदांगदयोर्वापि सुषेणस्य महाकपेः ॥ प्रसिद्धेयं भवेद्भूमिर्मैंदद्विविदयोरपि ॥ १५ ॥ विवस्वतस्तनूजस्य हरेश्च कुशपर्वणः ॥ ऋक्षस्य कपिमुख्यस्य मम चैव गतिर्भवेत् ॥१६॥ समीक्ष्य च महाबाहो राघवस्य पराक्रमम् ॥ लक्ष्मणस्य च विक्रान्तमभवत्प्रीतिमान्कपिः ॥ १७ ॥ तां रत्नवसनोपेतां गोष्ठागारावतंसकाम् ॥ यंत्रागारस्तनीमृद्धां प्रमदामिव भूषिताम् ॥१८॥ तां नष्टतिमिरां दीपैर्भास्वरैश्च महागृहैः ॥ नगरीं राक्षसेंद्रस्य स ददर्श महाकपिः ॥ १९ ॥ अथ सा हरिशार्दूलं प्रविशंतं महाबलम् ॥

नगरी स्वेन रूपेण ददर्श पवनात्मजम् ॥ २० ॥ सा तं हरिवरं दृष्ट्वा लंका रावणपालिता ॥ स्वयमेवोत्थिता तत्र विकृताननदर्शना ॥ २१ ॥ पुरस्तात्तस्य वीरस्य वायुसूनोरतिष्ठत ॥ मुञ्चमाना महानादमब्रवीत्पवनात्मजम् ॥ २२ ॥ कस्त्वं केन च कार्येण इह प्राप्तो वनालय ॥ कथयस्वेह यत्तत्त्वं यावत्प्राणा धरन्ति ते ॥ २३ ॥ न शक्या खल्वियं लंका प्रवेष्टुं वानर त्वया ॥ रक्षिता रावणबलैरभिगुप्ता समंततः ॥२४॥ अथ तामब्रवीद्वीरो हनूमानग्रतः स्थिताम् ॥ कथयिष्यामि तत्तत्त्वं यन्मां त्वं परिपृच्छसि ॥ २५ ॥ का त्वं विरूपनयना पुरद्वारेऽवतिष्ठसि ॥ किमर्थं चापि मां क्रोधान्निर्भर्त्सयसि दारुणा ॥ २६ ॥ हनूमद्वचनं श्रुत्वा लंका सा कामरूपिणी ॥ उवाच वचनं क्रुद्धा परुषं पवनात्मजम् ॥२७॥ अहं राक्षसराजस्य रावणस्य महात्मनः ॥ आज्ञाप्रतीक्षा दुर्धर्षा रक्षामि नगरीमिमाम् ॥ २८ ॥ न शक्या मामवज्ञाय प्रवेष्टुं नगरीमिमाम् ॥ अद्य प्राणैः परित्यक्तः स्वप्स्यसे निहतो मया ॥२९॥ अहं हि नगरी लंका स्वयमेव प्लवंगम ॥

सर्वतः परिरक्षामि अतस्ते कथितं मया ॥ ३० ॥ लंकाया वचनं श्रुत्वा हनूमान्मारुतात्मजः ॥ यत्नवान्स हरिश्रेष्ठः स्थितः शैल इवापरः ॥ ३१ ॥ स तां स्त्रीरूपविकृतां दृष्ट्वा वानरपुंगवः ॥ आबभाषेऽथ मेधावी सत्त्ववान्प्लवगर्षभः ॥ ३२ ॥ द्रक्ष्यामि नगरीं लंकां साट्टप्राकारतोरणाम् ॥ इत्यर्थमिह संप्राप्तः परं कौतूहलं हि मे ॥ ३३ ॥ वनान्युपवनानीह लंकायाः काननानि च ॥ सर्वतो गृहमुख्यानि द्रष्टुमागमनं हि मे ॥ ३४ ॥ तस्य तद्वचनं श्रुत्वा लंका सा कामरूपिणी ॥ भूय एव पुनर्वाक्यं बभाषे परुषाक्षरम् ॥ ३५ ॥ मामनिर्जित्य दुर्बुद्धे राक्षसेश्वरपालिताम् ॥ न शक्या ह्यद्य ते द्रष्टुं पुरीयं वानराधम ॥ ३६ ॥ ततः स हरिशार्दूलस्तामुवाच निशाचरीम् ॥ दृष्ट्वा पुरीमिमां भद्रे पुनर्यास्ये यथागतम् ॥ ३७ ॥ ततः कृत्वा महानादं सा वै लंका भयंकरम् ॥ तलेन वानरश्रेष्ठं ताडयामास वेगिता ॥ ३८ ॥ ततः स हरिशार्दूलो लंकया ताडितो भृशम् ॥ ननाद सुमहानादं वीर्यवान्मारुतात्मजः ॥ ३९ ॥ ततः संवर्तयामास वाम-

हस्तस्य सोऽगुलीः ॥ मुष्टिनाभिजघानैनां हनूमान्क्रोधमूर्च्छितः ॥ ४० ॥ स्त्री चेति मन्यमानेन नातिक्रोधः स्वयं कृतः ॥ ४१ ॥ सा तु तेन प्रहारेण विह्वलांगी निशाचरी ॥ पपात सहसा भूमौ विकृताननदर्शना ॥ ४२ ॥ ततस्तु हनुमान्वीरस्तां दृष्ट्वा विनिपातिताम् ॥ कृपां चकार तेजस्वी मन्यमानः स्त्रियं च ताम् ॥ ४३ ॥ ततो वै भृशमुद्विग्ना लंका सा गद्गदाक्षरम् ॥ उवाचागर्वितं वाक्यं हनूमंतं प्लवंगमम् ॥ ४४ ॥ प्रसीद सुमहाबाहो त्रायस्व हरिसत्तम ॥ समये सौम्य तिष्ठंति सत्त्ववंतो महाबलाः ॥ ४५ ॥ अहं तु नगरी लंका स्वयमेव प्लवंगम ॥ निर्जिताहं त्वया वीर विक्रमेण महाबल ॥ ४६ ॥ इदं च तथ्यं शृणु मे ब्रुवंत्या वै हरीश्वर ॥ स्वयं स्वयंभुवा दत्तं वरदानं यथा मम ॥ ४७ ॥ यदा त्वां वानरः कश्चिद्विक्रमाद्वशमानयेत् ॥ तदा त्वया हि विज्ञेयं रक्षसां भयमागतम् ॥ ४८ ॥ स हि मे समयः सौम्य प्राप्तोऽद्य तव दर्शनात् ॥ स्वयंभूविहितः सत्यो न तस्यास्ति व्यतिक्रमः ॥ ४९ ॥ सीतानिमित्तं राज्ञस्तु रावणस्य

दुरात्मनः ॥ रक्षसां चैव सर्वेषां विनाशः समुपागतः ॥ ५० ॥ तत्प्रविश्य हरिश्रेष्ठ पुरीं रावणपालिताम् ॥ विधत्स्व सर्वकार्याणि यानि यानीह वाञ्छसि॥५१॥ प्रविश्य शापोपहतां हरीश्वरः पुरीं शुभां राक्षसमुख्यपालिताम् ॥ यदृच्छया त्वं जनकात्मजां सतीं विमार्ग सर्वत्र गतो यथासुखम् ॥५२॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुंदरकांडे तृतीयः सर्गः ॥ ३ ॥

---

## चतुर्थः सर्गः ४

स निर्जित्य पुरीं लंकां श्रेष्ठां तां कामरूपिणीम् ॥ विक्रमेण महातेजा हनूमान्कपिसत्तमः ॥ अद्वारेण महावीर्यः प्राकारमवपुप्लुवे ॥ १ ॥ निशि लंकां महासत्त्वो विवेश कपिकुंजरः ॥ २॥ प्रविश्य नगरीं लंकां कपिराजहितंकरः ॥ चक्रेऽथ पादं सव्यं च शत्रूणां स तु मूर्धनि ॥ ३॥ प्रविष्टः सत्त्वसंपन्नो निशायां

मारुतात्मजः ॥ स महापथमास्थाय मुक्तपुष्पविराजितम् ॥ ४ ॥ ततस्तु तां पुरीं लंकां रम्यामभिययौ कपिः ॥ हसितोत्कृष्टनिनदैस्तूर्यघोषपुरस्कृतैः ॥ ५ ॥ वज्रांकुशनिकाशैश्च वज्रजालविभूषितैः ॥ गृहमेघैः पुरी रम्या बभासे द्यौरिवांबुदैः ॥ ६ ॥ प्रजज्वाल तदा लंका रक्षोगणगृहैः शुभैः ॥ सिताभ्रसदृशैश्चित्रैः पद्मस्वस्तिकसंस्थितैः ॥ वर्धमानगृहैश्चापि सर्वतः सुविभूषितैः ॥ ७ ॥ तां चित्रमाल्याभरणां कपिराजहितंकरः ॥ राघवार्थं चरञ्श्रीमान्ददर्श च ननंद च ॥ ८ ॥ भवनाद्भवनं गच्छन्ददर्श कपिकुंजरः ॥ विविधाकृतिरूपाणि भवनानि ततस्ततः ॥ ९ ॥ शुश्राव रुचिरं गीतं त्रिस्थानस्वरभूषितम् ॥ स्त्रीणां मदनविद्धानां दिवि चाप्सरसामिव ॥ १० ॥ शुश्राव कांचीनिनदं नूपुराणां च निःस्वनम् ॥ सोपाननिनदांश्चापि भवनेषु महात्मनाम् ॥ आस्फोटितनिनादांश्च क्ष्वेडितांश्च ततस्ततः ॥ ११ ॥ शुश्राव जपतां तत्र मंत्रान्रक्षोगृहेषु वै ॥ १२ ॥ स्वाध्यायनिरतांश्चैव यातुधानान्ददर्श सः ॥ रावणस्तवसंयुक्तान्गर्जतो राक्ष-

सानपि ॥ १३ ॥ राजमार्गं समावृत्य स्थितं रक्षोगणं महत् ॥ ददर्श मध्यमे गुल्मे राक्षसस्य चरान्बहून् ॥ १४ ॥ दीक्षिताञ्जटिलान्मुंडान् गोऽजिनांबरवाससः ॥ दर्भमुष्टिप्रहरणानग्निकुंडायुधांस्तथा ॥ १५ ॥ कूटमुद्गरपाणींश्च दंडायुधधरानपि ॥ एकाक्षानेककर्णांश्च चलदेकपयोधरान् ॥ १६ ॥ करालान्भुग्नवक्त्रांश्च विकटान्वामनांस्तथा ॥ धन्विनः खड्गिनश्चैव शतघ्नीमुसलायुधान् ॥१७॥ परिघोत्तमहस्तांश्च विचित्रकवचोज्ज्वलान् ॥ नातिस्थूलान्नातिकृशान्नातिदीर्घातिह्रस्वकान् ॥ १८ ॥ नातिगौरान्नातिकृष्णान्नातिकुब्जान्न वामनान् ॥ विरूपान्बहुरूपांश्च सुरूपांश्च सुवर्चसः ॥ ध्वजिनः पताकिनश्चैव ददर्श विविधायुधान् ॥ १९ ॥ शक्तिवृक्षायुधांश्चैव पट्टिशाशनिधारिणः ॥ क्षेपणीपाशहस्तांश्च ददर्श स महाकपिः ॥ २० ॥ स्रग्विणस्त्वनुलिप्तांश्च वराभरणभूषितान् ॥ नानावेषसमायुक्तान्यथास्वैरचरान्बहून् ॥ तीक्ष्णशूलधरांश्चैव वज्रिणश्च महाबलान् ॥ २१ ॥ शतसाहस्रमव्यग्रमारक्षं मध्यमं कपिः ॥ रक्षोधिपतिनिर्दिष्टं

ददर्शांतःपुराग्रतः ॥ २२ ॥ स तदा तद्गृहं दृष्ट्वा महाहाटकतोरणम् ॥ राक्षसेंद्रस्य विख्यातमद्रिमूर्ध्नि प्रतिष्ठितम् ॥ २३ ॥ पुंडरीकावतंसाभिः परिखाभिः समावृतम् ॥ प्राकारावृतमत्यंतं ददर्श स महाकपिः ॥ २४ ॥ त्रिविष्टपनिभं दिव्यं दिव्यनादविनादितम् ॥ वाजिह्रेषितसंघुष्टमद्भुतैश्च हयैस्तथा ॥२५॥ रथैर्यानैर्विमानैश्च तथा हयगजैः शुभैः ॥ वारणैश्च चतुर्दंतैः श्वेताभ्रनिचयोपमैः ॥ २६ ॥ भूषितै रुचिरद्वारं मत्तैश्च मृगपक्षिभिः । रक्षितं सुमहावीर्यैर्यातुधानैः सहस्रशः ॥ राक्षसाधिपतेर्गुप्तमाविवेश गृहं कपिः ॥ २७ ॥ सहेमजांबूनदचक्रवालं महार्हमुक्तामणिभूषितांतम् ॥ परार्ध्यकालागुरुचंदनार्हं स रावणांतःपुरमाविवेश ॥ २८ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुंदरकांडे चतुर्थः सर्गः ॥ ४ ॥

## पञ्चमः सर्गः ५

ततः स मध्यंगतमंशुमंतं ज्योत्स्नावितानं मुहुरुद्वमंतम् ॥ ददर्श धीमान्दिवि भानुमंतं गोष्ठे वृषं मत्तमिव भ्रमंतम् ॥ १ ॥ लोकस्य पापानि विनाशयंतं महोदधिं चापि समेधयंतम् ॥ भूतानि सर्वाणि विराजयंतं ददर्श शीतांशुमथाभियांतम् ॥ २ ॥ याभाति लक्ष्मीर्भुवि मंदरस्था यथा प्रदोषेषु च सागरस्था ॥ तथैव तोयेषु च पुष्करस्था रराज सा चारुनिशाकरस्था ॥ ३ ॥ हंसो यथा राजतपंजरस्थः सिंहो यथा मंदरकंदरस्थः ॥ वीरो यथा गर्वितकुंजरस्थश्चंद्रोऽपि बभ्राज तथांबरस्थः ॥ ४ ॥ स्थितः ककुद्मानिव तीक्ष्णशृंगो महाचलः श्वेत इवोर्ध्वशृंगः ॥ हस्तीव जांबूनदबद्धशृंगो विभाति चंद्रः परिपूर्णशृंगः ॥ ५ ॥ विनष्टशीतांबुतुषारपंको महाग्रहग्राहविनष्टपंकः ॥ प्रकाशलक्ष्म्याश्रयनिर्मलांको रराज चंद्रो भगवाञ्छशांकः ॥ ६ ॥ शिलातलं प्राप्य यथा मृगेंद्रो

महारणं प्राप्य यथा गजेंद्रः ॥ राज्यं समासाद्य यथा नरेंद्रस्तथा प्रकाशो विरराज चंद्रः ॥ ७ ॥ प्रकाशचंद्रोदयनष्टदोषः प्रवृद्धरक्षःपिशिताशदोषः ॥ रामाभिरामेरितचित्तदोषः स्वर्गप्रकाशो भगवान्प्रदोषः ॥ ८ ॥ तंत्रीस्वनाः कर्णसुखाः प्रवृत्ताः स्वपंति नार्यः पतिभिः सुवृत्ताः ॥ नक्तंचराश्चापि तथा प्रवृत्ता विहर्तुमत्यद्भुतरौद्रवृत्ताः ॥ ९ ॥ मत्तप्रमत्तानि समाकुलानि रथाश्व-भद्रासनसंकुलानि ॥ वीरश्रिया चापि समाकुलानि ददर्श धीमान्स कपिः कुलानि ॥ १० ॥ परस्परं चाधिकमाक्षिपंति भुजांश्च पीनानधिविक्षिपंति ॥ मत्तप्रलापानधिविक्षिपंति मत्तानि चान्योन्यमधिक्षिपंति ॥ ११ ॥ रक्षांसि वक्षांसि च विक्षिपंति गात्राणि कांतासु च विक्षिपंति ॥ रूपाणि चित्राणि च विक्षिपंति दृढानि चापानि च विक्षिपंति ॥ १२ ॥ ददर्श कांताश्च समाल-भंत्यस्तथापरास्तत्र पुनः स्वपंत्यः ॥ सुरूपवक्त्राश्च तथा हसंत्यः क्रुद्धाः पराश्चापि विनिःश्वसंत्यः ॥ १३ ॥ महागजैश्चापि तथा नदद्भिः सुपूजितैश्चापि तथा

सुसद्भिः ॥ रराज वीरैश्च विनिःश्वसद्भिर्ह्रदो भुजंगैरिव निःश्वसद्भिः ॥ १४ ॥ बुद्धिप्रधानान्रुचिराभिधानान्संश्रद्दधानाञ्जगतः प्रधानान् ॥ नानाविधानान्रुचिराभिधानान्ददर्श तस्यां पुरि यातुधानान् ॥ १५ ॥ ननंद दृष्ट्वा च स तान्सुरूपान्नानागुणानात्मगुणानुरूपान् ॥ विद्योतमानान्स च तान्सुरूपान् ददर्श कांश्चिच्च पुनर्विरूपान् ॥ १६ ॥ ततो वरार्हाः सुविशुद्धभावास्तेषां स्त्रियस्तत्र महानुभावाः ॥ प्रियेषु पानेषु च सक्तभावा ददर्श तारा इव सुप्रभावाः ॥१७॥ स्त्रियो ज्वलंतीस्त्रपयोपगूढा निशीथकाले रमणोपगूढाः ॥ ददर्श काश्चित्प्रमदोपगूढा यथा विहंगा विहगोपगूढः ॥ १८ ॥ अन्याः पुनर्हर्म्यतलोपविष्टास्तत्र प्रियांके सुसुखोपविष्टाः ॥ भर्तुः परा धर्मपरा निविष्टा ददर्श धीमान्मदनोपविष्टाः ॥ १९ ॥ अप्रावृताः कांचनराजिवर्णाः काश्चित्परार्ध्यास्तपनीयवर्णाः ॥ पुनश्च काश्चिच्छशलक्ष्मवर्णाः कांतप्रहीणा रुचिरांगवर्णाः ॥ २० ॥ ततः प्रियान्प्राप्य मनोभिरामान्सुप्रीतियुक्ताः सुमनोभिरामाः ॥ गृहेषु हृष्टाः परमा-

भिरामा हरिप्रवीरः स ददर्श रामाः ॥ २१ ॥ चंद्रप्रकाशाश्च हि वक्रमाला वक्राः सुपक्ष्माश्च सुनेत्रमालाः ॥ विभूषणानां च ददर्श मालाः शतह्रदानामिव चारुमालाः ॥ २२ ॥ नत्वेव सीतां परमाभिजातां पथि स्थिते राजकुले प्रजाताम् ॥ लतां प्रफुल्लामिव साधुजातां ददर्श तन्वीं मनसाभिजाताम् ॥ २३ ॥ सनातने वर्त्मनि संनिविष्टां रामेक्षणां तां मदनाभिविष्टाम् ॥ भर्तुर्मनः श्रीमदनुप्रविष्टां स्त्रीभ्यः पराभ्यश्च सदा विशिष्टाम् ॥२४॥ उष्णार्दितां सानुसृतास्रकंठीं पुरा वरार्होत्तमनिष्ककंठीम् ॥ सुजातपक्ष्मामभिरक्तकंठीं वने प्रवृत्तामिव नीलकंठीम् ॥ २५ ॥ अव्यक्तरेखामिव चंद्रलेखां पांसुप्रदिग्धामिव हेमरेखाम् ॥ क्षतप्ररूढामिव वर्णरेखां वायुप्रभुग्नामिव मेघरेखाम् ॥ २६ ॥ सीतामपश्यन्मनुजेश्वरस्य रामस्य पत्नीं वदतांवरस्य ॥ बभूव दुःखोपहतश्चिरस्य प्लवंगमो मंद इवाचिरस्य ॥ २७ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुंदरकांडे पंचमः सर्गः ॥ ५ ॥

## षष्ठः सर्गः ६

स निकामं विमानेषु विचरन्कामरूपधृक् ॥ विचचार कपिर्लंकां लाघवेन समन्वितः ॥ १ ॥ आससाद च लक्ष्मीवान्राक्षसेंद्रनिवेशनम् ॥ प्राकारेणार्कवर्णेन भास्वरेणाभिसंवृतम् ॥ २ ॥ रक्षितं राक्षसैर्भीमैः सिंहैरिव महद्वनम् ॥ समीक्ष्यमाणो भवनं चकाशे कपिकुंजरः ॥ ३ ॥ रूप्यकोपहितैश्चित्रैस्तोरणैर्हेमभूषणैः ॥ विचित्राभिश्च कक्ष्याभिर्द्वारैश्च रुचिरैर्वृतम् ॥ ४ ॥ गजास्थितैर्महामात्रैः शूरैश्च विगतश्रमैः ॥ उपस्थितमसंहार्यैर्हयैः स्यंदनयायिभिः ॥ ५ ॥ सिंहव्याघ्रतनुत्राणैर्दांतकांचनराजतीः ॥ घोषवद्भिर्विचित्रैश्च सदा विचरितं रथैः ॥६॥ बहुरत्नसमाकीर्णं परार्ध्यासनभूषितम् ॥ महारथसमावापं महारथमहासनम् ॥ ७ ॥ दृश्यैश्च परमोदारैस्तैस्तैश्च मृगपक्षिभिः ॥ विविधैर्बहुसाहस्रैः परिपूर्णं समंततः ॥ ८ ॥ विनीतैरंतपालैश्च रक्षोभिश्च सुरक्षितम् ॥ मुख्याभिश्च

वरस्त्रीभिः परिपूर्णं समंततः ॥ ९ ॥ मुदितप्रमदारत्नं राक्षसेंद्रनिवेशनम् ॥ वराभरणसंह्रादैः समुद्रस्वननिःस्वनम् ॥ १० ॥ तद्राजगुणसंपन्नं मुख्यैश्च वरचंदनैः ॥ महाजनसमाकीर्णं सिंहैरिव महद्वनम् ॥ ११ ॥ भेरीमृदंगाभिरुतं शंखघोषविनादितम् ॥ नित्यार्चितं पर्वसुतं पूजितं राक्षसैः सदा ॥ १२ ॥ समुद्रमिव गंभीरं समुद्रसमनिःस्वनम् ॥ महात्मनो महद्वेश्म महारत्नपरिच्छदम् ॥ महारत्नसमाकीर्णं ददर्श स महाकपिः ॥ १३ ॥ विराजमानं वपुषा गजाश्वरथसंकुलम् ॥ लंकाभरणमित्येव सोऽमन्यत महाकपिः ॥१४॥ चचार हनुमांस्तत्र रावणस्य समीपतः ॥ १५ ॥ गृहाद्गृहं राक्षसानामुद्यानानि च सर्वशः ॥ वीक्षमाणोऽप्यसंत्रस्तः प्रासादांश्च चचार सः ॥ १६ ॥ अवप्लुत्य महावेगः प्रहस्तस्य निवेशनम् ॥ ततोऽन्यत्पुप्लुवे वेश्म महापार्श्वस्य वीर्यवान् ॥ १७ ॥ अथ मेघप्रतीकाशं कुंभकर्णनिवेशनम् ॥ विभीषणस्य च तथा पुप्लुवे स महाकपिः ॥ १८ ॥ महोदरस्य च तथा विरूपाक्षस्य चैव हि ॥ विद्युज्जिह्वस्य भवनं

विद्युन्मालेस्तथैव च ॥ वज्रदंष्ट्रस्य च तथा पुप्लुवे स महाकपिः ॥१९॥ शुकस्य च महावेगः सारणस्य च धीमतः ॥ तथा चेंद्रजितो वेश्म जगाम हरियूथपः ॥२०॥ जंबुमालेः सुमालेश्च जगाम हरिसत्तमः ॥ रश्मिकेतोश्च भवनं सूर्यशत्रोस्तथैव च ॥ २१ ॥ वज्रकायस्य च तथा पुप्लुवे स महाकपिः ॥ धूम्राक्षस्याथ संपातेर्भवनं मारुतात्मजः ॥ २२ ॥ विद्युद्रूपस्य भीमस्य घनस्य विघनस्य च ॥ २३ ॥ शुकनाभस्य शक्रस्य शठस्य कपटस्य च ॥ ह्रस्वकर्णस्य दंष्ट्रस्य लोमशस्य च रक्षसः ॥२४॥ युद्धोन्मत्तस्य मत्तस्य ध्वजग्रीवस्य सादिनः ॥ विद्युज्जिह्वद्विजिह्वानां तथा हस्तिमुखस्य च ॥ २५ ॥ करालस्य विशालस्य शोणिताक्षस्य चैव हि ॥ प्लवमानः क्रमेणैव हनुमान्मारुतात्मजः ॥ २६ ॥ तेषु तेषु महार्हेषु भवनेषु महायशाः ॥ तेषामृद्धिमतामृद्धिं ददर्श स महाकपिः ॥ २७ ॥ सर्वेषां समतिक्रम्य भवनानि समंततः ॥ आससादाथ लक्ष्मीवान्राक्षसेंद्रनिवेशनम् ॥२८॥ रावणस्योपशायिन्यो ददर्श हरिसत्तमः ॥ विचरन्हरिशार्दूलो राक्षसी-

विकृतेक्षणाः ॥ शूलमुद्गरहस्ताश्च शक्तितोमरधारिणीः ॥ २९ ॥ ददर्श विविधान्गुल्मांस्तस्य रक्षःपतेर्गृहे ॥ राक्षसांश्च महाकायान्नानाप्रहरणोद्यतान् ॥ ३० ॥ रक्ताञ्श्वेतान्सितांश्चापि हरींश्चापि महाजवान् ॥ कुलीनान्रूपसंपन्नान्गजान्परगजारुजान् ॥ ३१ ॥ शिक्षितान्गजशिक्षायामैरावतसमान्युधि ॥ निहंतॄन्परसैन्यानां गृहे तस्मिन्ददर्श सः ॥ ३२ ॥ क्षरतश्च यथा मेघान्स्रवतश्च यथा गिरीन् ॥ मेघस्तनितनिर्घोषान्दुर्धर्षान्समरे परैः ॥ ३३ ॥ सहस्रं वाहिनीस्तत्र जांबूनदपरिष्कृताः ॥ हेमजालैरविच्छिन्नास्तरुणादित्यसंनिभाः ॥ ददर्श राक्षसेंद्रस्य रावणस्य निवेशने ॥ ३४ ॥ शिबिका विविधाकाराः स कपिर्मारुतात्मजः ॥ लतागृहाणि चित्राणि चित्रशालागृहाणि च ॥ ३५ ॥ क्रीडागृहाणि चान्यानि दारुपर्वतकानि च ॥ कामस्य गृहकं रम्यं दिवागृहकमेव च ॥ ददर्श राक्षसेंद्रस्य रावणस्य निवेशने ॥ ३६ ॥ स मंदरगिरिप्रख्यं मयूरस्थानसंकुलम् ॥ ध्वजयष्टिभिराकीर्णं ददर्श भवनोत्तमम् ॥ ३७ ॥ अनंतरत्ननिचयं

निधिजालं समंततः ॥ धीरनिष्ठितकर्मांगं गृहं भूतपतेरिव ॥३८॥ अर्चिर्भिश्चापि रत्नानां तेजसा रावणस्य च ॥ विरराज च तद्वेश्म रश्मिमानिव रश्मिभिः ॥३९॥ जांबूनदमयान्येव शयनान्यासनानि च ॥ भाजनानि च शुभ्राणि ददर्श हरियूथपः ॥ ४० ॥ मध्वासवकृतक्लेदं मणिभाजनसंकुलम् ॥ मनोरममसंबाधं कुबेरभवनं यथा ॥ ४१ ॥ नूपुराणां च घोषेण कांचीनां निःस्वनेन च ॥ मृदंगतालनिर्घोषैर्घोषवद्भिर्निनादितम् ॥ ४२ ॥ प्रासादसंघातयुतं स्त्रीरत्नशतसंकुलम् ॥ सव्यूढकक्ष्यं हनुमान्प्रविवेश महागृहम् ॥ ४३ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुंदरकांडे षष्ठः सर्गः ॥ ६ ॥

---

## सप्तमः सर्गः ७

स वेश्मजालं बलवान्ददर्श व्यासक्तवैदूर्यसुवर्णजालम् ॥ यथा महत्प्रावृषि

मेघजालं विद्युद्भिनद्धं सविहंगजालम् ॥ १ ॥ निवेशनानां विविधाश्च शालाः प्रधानशंखायुधचापशालाः ॥ मनोहराश्चापि पुनर्विशाला ददर्श वेश्माद्रिषु चंद्रशालाः ॥ २ ॥ गृहाणि नानावसुराजितानि देवासुरैश्चापि सुपूजितानि ॥ सर्वैश्च दोषैः परिवर्जितानि कपिर्ददर्श स्वबलार्जितानि ॥ ३ ॥ तानि प्रयत्नाभिसमाहितानि मयेन साक्षादिव निर्मितानि ॥ महीतले सर्वगुणोत्तराणि ददर्श लंकाधिपतेर्गृहाणि ॥ ४ ॥ ततो ददर्शोच्छ्रितमेघरूपं मनोहरं कांचनचारुरूपम् ॥ रक्षोधिपस्यात्मबलानुरूपं गृहोत्तमं ह्यप्रतिरूपरूपम् ॥ ५ ॥ महीतले स्वर्गमिव प्रकीर्णं श्रिया ज्वलंतं बहुरत्नकीर्णम् ॥ नानातरूणां कुसुमावकीर्णं गिरेरिवाग्रं रजसावकीर्णम् ॥ ६ ॥ नारीप्रवेकैरिव दीप्यमानं तडिद्भिरंभोधरमर्च्यमानम् ॥ हंसप्रवेकैरिव वाह्यमानं श्रिया युतं खे सुकृतां विमानम् ॥ ७ ॥ यथा नगाग्रं बहुधातुचित्रं यथा नभश्च ग्रहचंद्रचित्रम् ॥ ददर्श युक्तीकृतचारुमेघचित्रं विमानं बहुरत्नचित्रम् ॥ ८ ॥ मही कृता पर्वत-

राजिपूर्णा शैलाः कृता वृक्षवितानपूर्णाः ॥ वृक्षाः कृताः पुष्पवितानपूर्णाः पुष्पं कृतं केसरपत्रपूर्णम् ॥ ९ ॥ कृतानि वेश्मानि च पांडुराणि तथा सुपुष्पा अपि पुष्करिण्यः ॥ पुनश्च पद्मानि सकेसराणि वनानि चित्राणि सरोवराणि ॥ १० ॥ पुष्पाह्वयं नाम विराजमानं रत्नप्रभाभिश्च विघूर्णमानम् ॥ वेश्मोत्तमानामपि चोच्चमानं महाकपिस्तत्र महाविमानम् ॥ ११ ॥ कृताश्च वैदूर्यमया विहंगा रूप्यप्रवालैश्च तथा विहंगाः ॥ चित्राश्च नानावसुभिर्भुजंगा जात्यानुरूपास्तुरगाः शुभांगाः ॥ १२ ॥ प्रवालजांबूनदपुष्पपक्षाः सलीलमावर्जितजिह्मपक्षाः ॥ कामस्य साक्षादिव भांति पक्षाः कृता विहंगाः सुमुखाः सुपक्षाः ॥ १३ ॥ नियुज्यमानाश्च गजाः सुहस्ताः सकेसराश्चोत्पलपत्रहस्ताः ॥ बभूव देवी च कृता सुहस्ता लक्ष्मीस्तथा पद्मिनि पद्महस्ता ॥ १४ ॥ इतीव तद्गृहमभिगम्य शोभनं सविस्मयो नगमिव चारुकंदरम् ॥पुनश्च तत्परमसुगंधि सुंदरं हिमात्यये नगमिव चारुकंदरम् ॥ १५ ॥ ततः स तां कपिरभिपत्य

पूजितां चरन्पुरीं दशमुखबाहुपालिताम् ॥ अदृश्य तां जनकसुतां सुपूजितां सुदुःखितां पतिगुणवेगनिर्जिताम् ॥ १६ ॥ ततस्तदा बहुविधभावितात्मनः कृतात्मनो जनकसुतां सुवर्त्मनः ॥ अपश्यतोऽभवदतिदुःखितं मनः सचक्षुषः प्रविचरतो महात्मनः ॥ १७ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुंदरकांडे सप्तमः सर्गः ॥ ७ ॥

## अष्टमः सर्गः ८

स तस्य मध्ये भवनस्य संस्थितं महद्विमानं मणिरत्नचित्रितम् ॥ प्रतप्तजांबूनदजालकृत्रिमं ददर्श धीमान्पवनात्मजः कपिः ॥ १ ॥ तदप्रमेयप्रतिकारकृत्रिमं कृतं स्वयं साध्विति विश्वकर्मणा ॥ दिवं गते वायुपथे प्रतिष्ठितं व्यराजतादित्यपथस्य लक्ष्म तत् ॥ २ ॥ न तत्र किंचिन्न कृतं प्रयत्नतो न तत्र किंचिन्न

महार्घरत्नवत् ॥ न ते विशेषा नियताः सुरेष्वपि न तत्र किंचिन्न महाविशेषवत् ॥ ३ ॥ तपःसमाधानपराक्रमार्जितं मनःसमाधानविचारचारिणम् ॥ अनेकसंस्थानविशेषनिर्मितं ततस्ततस्तुल्यविशेषनिर्मितम् ॥ ४ ॥ मनः समाधाय तु शीघ्रगामिनं दुरासदं मारुततुल्यगामि ॥ महात्मनां पुण्यकृतां महर्द्धिनां यशस्विनामग्र्यमुदामिवालयम् ॥ ५ ॥ विशेषमालंब्य विशेषसंस्थितं विचित्रकूटं बहुकूटमंडितम् ॥ मनोभिरामं शरदिंदुनिर्मलं विचित्रकूटं शिखरं गिरेर्यथा ॥ ६ ॥ वहंति यत्कुंडलशोभितानना महाशना व्योमचरा निशाचराः ॥ विवृत्तविध्वस्तविशाललोचना महाजवा भूतगणाः सहस्रशः ॥ ७ ॥ वसंतपुष्पोत्करचारुदर्शनं वसंतमासादपि चारुदर्शनम् ॥ स पुष्पकं तत्र विमानमुत्तमं ददर्श तद्वानरवीरसत्तमः ॥ ८ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुंदरकांडेऽष्टमः सर्गः ॥ ८ ॥

---

## नवमः सर्गः ९

तस्यालयवरिष्ठस्य मध्ये विमलमायतम् । ददर्श भवनश्रेष्ठं हनूमान्मारुतात्मजः ॥ १ ॥ अर्धयोजनविस्तीर्णमायतं योजनं महत् ॥ भवनं राक्षसेंद्रस्य बहुप्रासादसंकुलम् ॥ २ ॥ मार्गमाणस्तु वैदेहीं सीतामायतलोचनाम् ॥ सर्वतः परिचक्राम हनूमानरिसूदनः ॥ ३ ॥ उत्तमं राक्षसावासं हनूमानवलोकयन् ॥ आससादाथ लक्ष्मीवान्राक्षसेंद्रनिवेशनम् ॥ ४ ॥ चतुर्विषाणैर्द्विरदैस्त्रिविषाणैस्तथैव च ॥ परिक्षिप्तमसंबाधं रक्ष्यमाणमुदायुधैः ॥ ५ ॥ राक्षसीभिश्च पत्नीभी रावणस्य निवेशनम् ॥ आहृताभिश्च विक्रम्य राजकन्याभिरावृतम् ॥६॥ तन्नक्रमकराकीर्णं तिमिंगिलझषाकुलम् ॥ वायुवेगसमाधूतं पन्नगैरिव सागरम् ॥ ७ ॥ या हि वैश्रवणे लक्ष्मीर्या चंद्रे हरिवाहने ॥ सा रावणगृहे रम्या नित्यमेवानपायिनी ॥ ८ ॥ या च राज्ञः कुबेरस्य यमस्य वरुणस्य च ॥ तादृशी

तद्विशिष्टा वा ऋद्धी रक्षोगृहेष्विह ॥ ९ ॥ तस्य हर्म्यस्य मध्यस्थं वेश्म चान्यत्सुनिर्मितम् ॥ बहुनिर्यूहसंयुक्तं ददर्श पवनात्मजः ॥ १० ॥ ब्रह्मणोऽर्थे कृतं दिव्यं दिवि यद्विश्वकर्मणा ॥ विमानं पुष्पकं नाम सर्वरत्नविभूषितम् ॥ परेण तपसा लेभे यत्कुबेरः पितामहात् ॥ ११ ॥ कुबेरमोजसा जित्वा लेभे तद्राक्षसेश्वरः ॥ १२ ॥ ईहामृगसमायुक्तैः कार्तस्वरहिरण्मयैः ॥ सुकृतै राजितं स्तम्भैः प्रदीप्तमिव च श्रिया ॥ १३ ॥ मेरुमंदरसंकाशैरुल्लिखद्भिरिवांबरम् ॥ कूटागारैः शुभागारैः सर्वतः समलंकृतम् ॥१४॥ ज्वलनार्कप्रतीकाशैः सुकृतं विश्वकर्मणा ॥ हेमसोपानसंयुक्तं चारुप्रवरवेदिकम् ॥ १५ ॥ जालवातायनैर्युक्तं कांचनैः स्फाटिकैरपि ॥ इंद्रनीलमहानीलमणिप्रवरवेदिकम् ॥ १६ ॥ विद्रुमेण विचित्रेण मणिभिश्च महाधनैः ॥ निस्तुलाभिश्च मुक्ताभिस्तलेनाभिविराजितम् ॥१७॥ चंदनेन च रक्तेन तपनीयनिभेन च ॥ सुपुण्यगंधिना युक्तमादित्यतरुणोपमम् ॥ १८ ॥ कूटागारैर्वराकारैर्विविधैः समलंकृतम् ॥ विमानं पुष्पकं दिव्य-

आरुरोह महाकपिः ॥ १९ ॥ तत्रस्थः सर्वतो गंधं पानभक्ष्यान्नसंभवम् ॥ दिव्यं संमूर्च्छितं जिघ्रन् रूपवंतमिवानिलम् ॥ २० ॥ स गंधस्तं महासत्त्वं बंधुर्बंधुमिवोत्तमम् ॥ इत एहीत्युवाचेव तत्र यत्र स रावणः ॥ २१ ॥ ततस्तां प्रस्थितः शालां ददर्श महतीं शिवाम् ॥ रावणस्य महाकांतां कांतामिव वरस्त्रियम् ॥२२॥ मणिसोपानविकृतां हेमजालविराजिताम् ॥ स्फाटिकैरावृततलां दंतांतरितरूपिकाम् ॥ २३ ॥ मुक्तावज्रप्रवालैश्च रूप्यचामीकरैरपि ॥ विभूषितां मणिस्तंभैः सुबहुस्तंभभूषिताम् ॥ २४ ॥ समैर्ऋजुभिरत्युच्चैः समंतात्सुविभूषितैः ॥ स्तंभैः पक्षैरिवात्युच्चैर्दिवं संप्रस्थितामिव ॥ २५ ॥ महत्या कुथयास्तीर्णां पृथिवीलक्षणांकया ॥ पृथिवीमिव विस्तीर्णां सराष्ट्रगृहशालिनीम् ॥ २६ ॥ नादितां मत्तविहगैर्दिव्यगंधाधिवासिताम् ॥ परार्ध्यास्तरणोपेतां रक्षोधिपनिषेविताम् ॥ २७ ॥ धूम्रामगुरुधूपेन विमलां हंसपांडुराम् ॥ पत्रपुष्पोपहारेण कल्माषीमिव सुप्रभाम् ॥ २८ ॥ मनसो मोदजननीं वर्णस्यापि प्रसाधि-

वानरः ॥ उत्पपात नदन्व्योम्नि दिशो दश निनादयन् ॥ २२ ॥ ततस्तु दुर्धरो वीरः सरथः सज्जकार्मुकः ॥ किरन्शरशतैस्तीक्ष्णैरभिपेदे महाबलः ॥ २३ ॥ स कपिर्वारयामास तं व्योम्नि शरवर्षिणम् ॥ वृष्टिमंतं पयोदांते पयोदमिव मारुतः ॥ २४ ॥ अर्द्यमानस्ततस्तेन दुर्धरेणानिलात्मजः ॥ चकार निनदं भूयो व्यवर्धत च वीर्यवान् ॥ २५ ॥ स दूरं सहसोत्पत्य दुर्धरस्य रथे हरिः ॥ निपपात महावेगो विद्युद्राशिर्गिराविव ॥ २६ ॥ ततः स मथिताष्टाश्वं रथं भग्नाक्षकूबरम् ॥ विहाय न्यपतद्भूमौ दुर्धरस्त्यक्तजीवितः ॥ २७ ॥ तं विरूपाक्षयूपाक्षौ दृष्ट्वा निपतितं भुवि ॥ तौ जातरोषौ दुर्धर्षावुत्पेततुररिंदमौ ॥ २८ ॥ स ताभ्यां सहसोत्प्लुत्य विष्ठितो विमलेऽम्बरे ॥ मुद्गराभ्यां महाबाहुर्वक्षस्यभिहतः कपिः ॥ २९ ॥ तयोर्वेगवतोर्वेगं निहत्य स महाबलः ॥ निपपात पुनर्भूमौ सुपर्णसमविक्रमः ॥ ३० ॥ स सालवृक्षमासाद्य समुत्पाट्य च वानरः ॥ तावुभौ राक्षसौ वीरौ जघान पवनात्मजः ॥ ३१ ॥ ततस्तांस्त्रीन्हतान्ज्ञात्वा वानरेण

तरस्विना ॥ अभिपेदे महावेगः प्रहस्य प्रघसो बली ॥ ३२ ॥ भासकर्णश्च संक्रुद्धः शूलमादाय वीर्यवान् ॥ एकतः कपिशार्दूलं यशस्विनमवस्थितौ ॥ ३३ ॥ पट्टिशेन शिताग्रेण प्रघसः प्रत्यपोथयत् ॥ भासकर्णश्च शूलेन राक्षसः कपिकुंजरम् ॥ ३४ ॥ स ताभ्यां विक्षतैर्गात्रैरसृग्दिग्धतनूरुहः ॥ अभवद्वानरः क्रुद्धो बालसूर्यसमप्रभः ॥ ३५ ॥ समुत्पाट्य गिरेः शृंगं समृगव्यालपादपम् ॥ जघान हनुमान्वीरो राक्षसौ कपिकुंजरः ॥ गिरिशृङ्गसुनिष्पिष्टौ तिलशस्तौ बभूवतुः ॥ ३६ ॥ ततस्तेष्ववसन्नेषु सेनापतिषु पंचसु ॥ बलं तदवशेषं तु नाशयामास वानरः ॥ ३७ ॥ अश्वैरश्वान्गजैर्नागान्योधैर्योधान्रथै रथान् ॥ स कपिर्नाशयामास सहस्राक्ष इवासुरान् ॥ ३८ ॥ हतैर्नागैस्तुरंगैश्च भग्नाक्षैश्च महारथैः ॥ हतैश्च राक्षसैर्भूमी रुद्धमार्गा समंततः ॥ ३९ ॥ ततः कपिस्तान्ध्व-जिनीपतीन्रणे निहत्य वीरान्सबलान्सवाहनान् ॥ तदेव वीरः परिगृह्य तोरणं

कृतक्षणः काल इव प्रजाक्षये ॥ ४० ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुंदरकांडे षट्चत्वारिंशः सर्गः ॥ ४६ ॥

---

## सप्तचत्वारिंशः सर्गः ४७

सेनापतीन्पंच स तु प्रमापितान् हनूमता सानुचरान्सवाहनान् ॥ निशम्य राजा समरोद्धतोन्मुखं कुमारमक्षं प्रसमैक्षताक्षम् ॥ १ ॥ स तस्य दृष्ट्यर्पण-संप्रचोदितः प्रतापवान्कांचनचित्रकार्मुकः ॥ समुत्पपाताथ सदस्युदीरितो द्विजातिमुख्यैर्हविषेव पावकः ॥ २ ॥ ततो महान्बालदिवाकरप्रभं प्रतप्तजांबू-नदजालसंततम् ॥ रथं समास्थाय ययौ स वीर्यवान्महाहरिं तं प्रति नैर्ऋत-र्षभः ॥ ३ ॥ ततस्तपःसंग्रहसंचयार्जितं प्रतप्तजांबूनदजालचित्रितम् ॥ पता-किनं रत्नविभूषितध्वजं मनोजवाष्टाश्ववरैः सुयोजितम् ॥ ४ ॥ सुरासुराधृष्य-

प्रसंगचारिणं तडित्प्रभं व्योमचरं समाहितम् ॥ सतूणमष्टासिनिबद्धबंधुरं यथाक्रमावेशितशक्तितोमरम् ॥ ५ ॥ विराजमानं प्रतिपूर्णवस्तुना सहेमदाम्ना शशिसूर्यवर्चसा ॥ दिवाकराभं रथमास्थितस्ततः स निर्जगामामरतुल्यविक्रमः ॥ ६ ॥ स पूरयन्खं च महीं च साचलां तुरंगमातंगमहारथस्वनैः ॥ बलैः समेतैः सह तोरणस्थितं समर्थमासीनमुपागमत्कपिम् ॥ ७ ॥ स तं समासाद्य हरिं हरीक्षणो युगांतकालाग्निमिव प्रजाक्षये ॥ अवस्थितं विस्मितजातसंभ्रमं समैक्षताक्षो बहुमानचक्षुषा ॥ ८ ॥ स तस्य वेगं च कपेर्महात्मनः पराक्रमं चारिषु रावणात्मजः ॥ विचारयन्स्वं च बलं महाबलो युगक्षये सूर्य इवाभिवर्धत ॥९॥ स जातमन्युः प्रसमीक्ष्य विक्रमं स्थितः स्थिरः संयति दुर्निवारणम् ॥ समाहितात्मा हनुमंतमाहवे प्रचोदयामास शितैः शरैस्त्रिभिः ॥ १० ॥ ततः कपिं तं प्रसमीक्ष्य गर्वितं जितश्रमं शत्रुपराजयोर्जितम् ॥ अवैक्षताक्षः समुदीर्णमानसं स बाणपाणिः प्रगृहीतकार्मुकः ॥ ११ ॥ स हेमनिष्कांगदचारुकुंडलः

समाससादाशुपराक्रमः कपिम् ॥ तयोर्बभूवाप्रतिमः समागमः सुरासुराणामपि संभ्रमप्रदः ॥१२॥ ररास भूमिर्न तताप भानुमान्ववौ न वायुः प्रचचाल चाचलः ॥ कपेः कुमारस्य च वीर्यसंयुगं ननाद च द्यौरुदधिश्च चुक्षुभे ॥१३॥ स तस्य वीरः सुमुखान्पतत्रिणः सुवर्णपुंखान्सविषानिवोरगान् ॥ समाधिसंयोगविमोक्षतत्त्वविच्छरानथ त्रीन्कपिमूर्ध्न्यताडयत् ॥ १४ ॥ स तैः शरैर्मूर्ध्नि समं निपातितैः क्षरन्नसृग्दिग्धविवृत्तनेत्रः ॥ नवोदितादित्यनिभः शरांशुमान् व्यराजतादित्य इवांशुमालिकः ॥१५॥ ततः स प्लवगाधिपमंत्रिसत्तमः समीक्ष्य तं राजवरात्मजं रणे ॥ उदग्रचित्रायुधचित्रकार्मुकं जहर्ष चापूर्यत चाहवोन्मुखः ॥ १६ ॥ स मंदराग्रस्थ इवांशुमाली विवृद्धकोपो बलवीर्यसंयुतः ॥ कुमारमक्षं सबलं सवाहनं ददाह नेत्राग्निमरीचिभिस्तदा ॥ १७ ॥ ततः सबाणासनचित्रकार्मुकः शरप्रवर्षो युधि राक्षसांबुदः ॥ शरान्मुमोचाशु हरीश्वराचले बलाहको वृष्टिमिवाचलोत्तमे ॥ १८ ॥ कपिस्ततस्तं रणचंडविक्रमं प्रवृद्धतेजोबल-

वीर्यसायकम् ॥ कुमारमक्षं प्रसमीक्ष्य संयुगे ननाद हर्षाद्घनतुल्यनिःस्वनः ॥१९॥ स बालभावाद्युधि वीर्यदर्पितः प्रवृद्धमन्युः क्षतजोपमेक्षणः ॥ समाससादाप्रतिमं रणे कपिं गजो महाकूपमिवावृतं तृणैः ॥ २० ॥ स तेन बाणैः प्रसभं निपातितैश्चकार नादं घननादनिःस्वनः ॥ समुत्पपाताशु नभः समारुहन्भुजोरुविक्षेपणघोरदर्शनः ॥ २१ ॥ तमुत्पतन्तं समभिद्रवद्बली स राक्षसानां प्रवरः प्रतापवान् ॥ रथी रथिश्रेष्ठतमः किरञ्शरैः पयोधरः शैलमिवाश्मवृष्टिभिः ॥२२॥ स तान्शरांस्तस्य हरिर्विमोक्षयंश्चचार वीरः पथि वायुसेविते ॥ शरांतरे मारुतवद्विनिष्पतन्मनोजवः संयति भीमविक्रमः ॥ २३ ॥ तमात्तबाणासनमाहवोन्मुखं खमास्तृणंतं विविधैः शरोत्तमैः ॥ अवैक्षताक्षं बहुमानचक्षुषा जगाम चिंतां स च मारुतात्मजः ॥ २४ ॥ ततः शरैर्भिन्नभुजांतरः कपिः कुमारवर्येण महात्मना नदन् ॥ महाभुजः कर्मविशेषतत्त्वविद्विचिंतयामास रणे पराक्रमम् ॥ २५ ॥ अबालवद्बालदिवाकरप्रभः करोत्ययं कर्म महान्महाबलः ॥

न चास्य सर्वाहवकर्मशालिनः प्रमापणे मे मतिरत्र जायते ॥२६॥ अयं महात्मा च महांश्च वीर्यतः समाहितश्चातिसहश्च संयुगे ॥ असंशयं कर्मगुणोदयादयं सनागयक्षैर्मुनिभिश्च पूजितः ॥२७॥ पराक्रमोत्साहविवृद्धमानसः समीक्षते मां प्रमुखोऽग्रतः स्थितः ॥ पराक्रमो ह्यस्य मनांसि कंपयेत्सुरासुराणामपि शीघ्र-कारिणः ॥ २८ ॥ न खल्वयं नाभिभवेदुपेक्षितः पराक्रमो ह्यस्य रणे विवर्धते ॥ प्रमापणं ह्यस्य ममाद्य रोचते न वर्धमानोऽग्निरुपेक्षितुं क्षमः ॥२९॥ इति प्रवेगं तु परस्य तर्कयन् स्वकर्मयोगं च विधाय वीर्यवान् ॥ चकार वेगं तु महाबल-स्तदा मतिं च चक्रेऽस्य वधे दुरात्मनः ॥ ३० ॥ स तस्य तानष्ट वरान्महाहया-न्समाहितान्भारसहान्विवर्तने ॥ जघान वीरः पथि वायुसेविते तलप्रहारैः पवनात्मजः कपिः ॥३१॥ ततस्तलेनाभिहतो महारथः स तस्य पिंगाधिपमंत्रि-निर्जितः ॥ स भग्ननीडः परिवृत्तकूबरः पपात भूमौ हतवाजिरंबरात् ॥ ३२ ॥ स तं परित्यज्य महारथो रथं सकार्मुकः खड्गधरः खमुत्पतन् ॥ तपोभियोगा-

द्यपिरुग्रवीर्यवान् विहाय देहं मरुतामिवालयम् ॥ ३३ ॥ कपिस्ततस्तं विचरं-तमंबरे पतत्रिराजानिलसिद्धसेविते ॥ समेत्य तं मारुततुल्यविक्रमः क्रमेण जग्राह च पादयोर्दृढम् ॥ ३४ ॥ स तं समाविध्य सहस्रशः कपिर्महोरगं गृह्य इवांडजेश्वरः ॥ मुमोच वेगात्पितृतुल्यविक्रमो महीतले संयति वानरोत्तमः ॥ ३५ ॥ स भग्नबाहूरुकटीशिरोधरः क्षरन्नसृङ्निर्मथितास्थिलोचनः ॥ संभिन्न-संधिः प्रविकीर्णबंधनो हतः क्षितौ वायुसुतेन राक्षसः ॥ ३६ ॥ महाकपिर्भूमि-तले निपीड्य तं चकार रक्षोधिपतेर्महद्भयम् ॥ महर्षिभिश्चक्रचरैः समागतैः समेत्य भूतैश्च सयक्षपन्नगैः ॥ सुरैश्च सेंद्रैर्भृशजातविस्मयैर्हते कुमारे स कपि-र्निरीक्षितः ॥३७॥ निहत्य तं वज्रिसुतोपमं रणे कुमारमक्षं क्षतजोपमेक्षणम् ॥ तदेव वीरोऽभिजगाम तोरणं कृतक्षणः काल इव प्रजाक्षये ॥३८॥ इत्यार्षे श्रीम-द्रामायणे वाल्मीकीय आदिकाव्ये सुंदरकांडे सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

## अष्टचत्वारिंशः सर्गः ४८

ततस्तु रक्षोधिपतिर्महात्मा हनूमताक्षे निहते कुमारे ॥ मनः समाधाय स देवकल्पं समादिदेशेंद्रजितं स रोषात् ॥ १ ॥ त्वमस्त्रविच्छस्त्रभृतां वरिष्ठः सुरासुराणामपि शोकदाता ॥ सुरेषु सेंद्रेषु च दृष्टकर्मा पितामहाराधनसंचितास्त्रः ॥ २ ॥ त्वदस्त्रबलमासाद्य ससुराः समरुद्गणाः ॥ न शेकुः समरे स्थातुं सुरेश्वरसमाश्रिताः ॥ ३ ॥ न कश्चित्त्रिषु लोकेषु संयुगे न गतश्रमः ॥ भुजवीर्याभिगुप्तश्च तपसा चाभिरक्षितः ॥ देशकालप्रधानज्ञ त्वमेव मतिसत्तमः ॥ ४ ॥ न तेऽस्त्यशक्यं समरेषु कर्मणां न तेऽस्त्यकार्यं मतिपूर्वमंत्रणे ॥ न सोऽस्ति कश्चित्त्रिषु संग्रहेषु न वेद यस्तेऽस्त्रबलं बलं च ॥ ५ ॥ ममानुरूपं तपसो बलं च ते पराक्रमश्चास्त्रबलं च संयुगे ॥ न त्वां समासाद्य रणावमर्दे मनः श्रमं गच्छति निश्चितार्थम् ॥ ६ ॥ निहताः किंकराः सर्वे जंबुमाली

च राक्षसः ॥ अमात्यपुत्रा वीराश्च पंच सेनाग्रगामिनः ॥ ७ ॥ बलानि सुसमृद्धानि साश्वनागरथानि च ॥ महोदरश्च दयितः कुमारोऽक्षश्च सूदितः ॥ ८ ॥ न तु तेष्वेव मे सारो यस्त्वय्यरिनिषूदन ॥ ९ ॥ इदं च दृष्ट्वा निहतं महद्बलं कपेः प्रभावं च पराक्रमं च ॥ त्वमात्मनश्चापि निरीक्ष्य सारं कुरुष्व वेगं स्वबलानुरूपम् ॥ १० ॥ बलावमर्दैस्त्वयि संनिकृष्टे यथागते शाम्यति शांतशत्रुः ॥ तथा समीक्ष्यात्मबलं परं च वै समारभस्वास्त्रभृतां वरिष्ठ ॥ ११ ॥ न वीर सेना गणशश्च्यवंति न वज्रमादाय विशालसारम् ॥ न मारुतस्यास्ति गतिप्रमाणं न चाग्निकल्पः करणेन हंतुम् ॥ १२ ॥ तमेवमर्थं प्रसमीक्ष्य सम्यक् स्वकर्मसाम्याद्धि समाहितात्मा ॥ स्मरंश्च दिव्यं धनुषोऽस्य वीर्यं व्रजाक्षतं कर्म समारभस्व ॥ १३ ॥ न खल्वियं मतिश्रेष्ठ यत्त्वां संप्रेषयाम्यहम् ॥ इयं च राजधर्माणां क्षत्रस्य च मतिर्मता ॥ १४ ॥ नानाशास्त्रेषु संग्रामे वैशारद्यमरिंदम ॥ अवश्यमेव बोद्धव्यं काम्यश्च विजयो रणे ॥ १५ ॥ ततः पितुस्त-

द्वचनं निशम्य प्रदक्षिणं दक्षसुतप्रभावः ॥ चकार भर्तारमतित्वरेण रणाय वीरः प्रतिपन्नबुद्धिः ॥ १६ ॥ ततस्तैः स्वगणैरिष्टैरिंद्रजित्प्रतिपूजितः ॥ युद्धोद्धतकृतोत्साहः संग्रामं संप्रपद्यत ॥ १७ ॥ श्रीमान्पद्मविशालाक्षो राक्षसाधिपतेः सुतः ॥ निर्जगाम महातेजाः समुद्र इव पर्वणि ॥ १८ ॥ स पक्षिराजोपमतुल्यवेगैर्व्यालैश्चतुर्भिः सिततीक्ष्णदंष्ट्रैः ॥ रथं समायुक्तमसह्यवेगः समारुरोहेंद्रजिदिंद्रकल्पः ॥ १९ ॥ स रथी धन्विनां श्रेष्ठः शस्त्रज्ञोऽस्त्रविदां वरः ॥ रथेनाभिययौ क्षिप्रं हनूमान्यत्र सोऽभवत् ॥ २० ॥ स तस्य रथनिर्घोषं ज्यास्वनं कार्मुकस्य च ॥ निशम्य हरिवीरोऽसौ संप्रहृष्टतरोऽभवत् ॥ २१ ॥ इंद्रजिच्चापमादाय शितशल्यांश्च सायकान् ॥ हनूमंतमभिप्रेक्ष्य जगाम रणपंडितः ॥ २२ ॥ तस्मिंस्ततः संयति जातहर्षे रणाय निर्गच्छति बाणपाणौ ॥ दिशश्च सर्वाः कलुषीबभूवुर्मृगाश्च रौद्रा बहुधा विनेदुः ॥ २३ ॥ समागतास्तत्र सनागयक्षा महर्षयश्चक्रचराश्च सिद्धाः ॥ नभः समावृत्य च पक्षिसंघा विनेदुरुच्चैः परमप्र-

हृष्टाः ॥ २४ ॥ आयांतं सरथं दृष्ट्वा तूर्णमिंद्रध्वजं कपिः ॥ ननाद च महानादं व्यवर्धत च वेगवान् ॥ २५ ॥ इंद्रजित्तु रथं दिव्यमास्थितश्चित्रकार्मुकः ॥ धनुर्विस्फारयामास तडिदूर्जितनिःस्वनम् ॥ २६ ॥ ततः समेतावतितीक्ष्णवेगौ महाबलौ तौ रणनिर्विशंकौ ॥ कपिश्च रक्षोधिपतेश्च पुत्रः सुरासुरेंद्राविव बद्धवैरौ ॥ २७ ॥ स तस्य वीरस्य महारथस्य धनुष्मतः संयति संमतस्य ॥ शरप्रवेगं व्यहनत्प्रवृद्धश्चचार मार्गे पितुरप्रमेयः ॥ २८ ॥ ततः शरानायततीक्ष्णशल्यान्सुपत्रिणः कांचनचित्रपुंखान् ॥ मुमोच वीरः परवीरहंता सुसंततान्वज्रसमानवेगान् ॥ २९ ॥ ततः स तत्स्यंदननिःस्वनं च मृदंगभेरीपटहध्वनिं च ॥ विकृष्यमाणस्य च कार्मुकस्य निशम्य घोषं पुनरुत्पपात ॥ ३० ॥ शराणामंतरेष्वाशु व्यावर्तत महाकपिः ॥ हरिस्तस्याभिलक्ष्यस्य मोक्षयँल्लक्ष्यसंग्रहम् ॥ ३१ ॥ शराणामग्रतस्तस्य पुनः समभिवर्तत ॥ प्रसार्य हस्तौ हनुमानुत्पपातानिलात्मजः ॥ ३२ ॥ तावुभौ वेगसंपन्नौ रणकर्मविशारदौ ॥ सर्वभूतमनोग्राहि

चक्रतुर्युद्धमुत्तमम् ॥ ३३ ॥ हनूमतो वेद न राक्षसोऽन्तरं न मारुतिस्तस्य तु रक्षसोऽन्तरम् ॥ परस्परं निर्विषहौ बभूवतुः समेत्य तौ देवसमानविक्रमौ ॥ ३४ ॥ ततस्तु लक्ष्ये स विहन्यमाने शरेष्वमोघेषु च संपतत्सु ॥ जगाम चिंतां महतीं महात्मा समाधिसंयोगसमाहितात्मा ॥ ३५ ॥ ततो मतिं राक्षसराजसूनुश्चकार तस्मिन्हरिवीरमुख्ये ॥ अवध्यतां तस्य कपेः समीक्ष्य कथं निगच्छेदिति निग्रहार्थम् ॥ ३६ ॥ ततः पैतामहं वीरः सोऽस्त्रमस्त्रविदां वरः ॥ संदधे सुमहातेजास्तं हरिप्रवरं प्रति ॥ ३७ ॥ अवध्योऽयमिति ज्ञात्वा तमस्त्रेणास्त्रतत्त्ववित् ॥ निजग्राह महाबाहुं मारुतात्मजमिंद्रजित् ॥ ३८ ॥ तेन बद्धस्ततोऽस्त्रेण राक्षसेन स वानरः ॥ अभवन्निर्विचेष्टश्च पपात च महीतले ॥३९॥ ततोऽथ बुद्ध्वा स तदस्त्रबंधं प्रभोः प्रभावाद्विगताल्पवेगः ॥ पितामहानुग्रहमात्मनश्च विचिंतयामास हरिप्रवीरः ॥ ४० ॥ ततः स्वायंभुवैर्मंत्रैर्ब्रह्मास्त्रं चाभिमंत्रितम् ॥ हनूमांश्चिंतयामास वरदानं पितामहात् ॥ ४१ ॥ न मेऽस्य

बन्धस्य च शक्तिरस्ति विमोक्षणे लोकगुरोः प्रभावात् ॥ इत्येवमेवं विहितोऽस्त्रबंधो मयात्मयोनेरनुवर्तितव्यः ॥ ४२ ॥ स वीर्यमस्त्रस्य कपिर्विचार्य पितामहानुग्रहमात्मनश्च ॥ विमोक्षशक्तिं परिचिंतयित्वा पितामहाज्ञामनुवर्तते स्म ॥ ४३ ॥ अस्त्रेणापि हि बद्धस्य भयं मम न जायते ॥ पितामहमहेंद्राभ्यां रक्षितस्यानिलेन च ॥ ४४ ॥ ग्रहणे चापि रक्षोभिर्महन्मे गुणदर्शनम् ॥ राक्षसेंद्रेण संवादस्तस्माद्गृह्णंतु मां परे ॥ ४५ ॥ स निश्चितार्थः परवीरहंता समीक्ष्यकारी विनिवृत्तचेष्टः ॥ परैः प्रसह्याभिगतैर्निगृह्य ननाद तैस्तैः परिभर्त्स्यमानः ॥ ४६ ॥ ततस्ते राक्षसा दृष्ट्वा निर्विचेष्टमरिंदमम् ॥ बबंधुः शणवल्कैश्च द्रुमचीरैश्च संहतैः ॥ ४७ ॥ स रोचयामास परैश्च बंधं प्रसह्य वीरैरभिगर्हणं च ॥ कौतूहलान्मां यदि राक्षसेंद्रो द्रष्टुं व्यवस्येदिति निश्चितार्थः ॥ ४८ ॥ स बद्धस्तेन वल्केन विमुक्तोऽस्त्रेण वीर्यवान् ॥ अस्त्रबंधः स चान्यं हि न बंधमनुवर्तते ॥ ४९ ॥ अथेंद्रजित्तं द्रुमचीरबद्धं विचार्य वीरः कपिसत्तमं तम् ॥ विमुक्तम-

स्त्रेण जगाम चिंतामन्येन बद्धोऽप्यनुवर्तंतेऽस्त्रम् ॥ ५० ॥ अहो महत्कर्म कृतं निरर्थं न राक्षसैर्मंत्रगतिर्विमृष्टा ॥ पुनश्च नास्त्रे विहतेऽस्त्रमन्यत्प्रवर्तते संशयिताः स्म सर्वे ॥ ५१ ॥ अस्त्रेण हनुमान्मुक्तो नात्मानमवबुध्यते ॥ कृष्यमाणस्तु रक्षोभिस्तैश्च बंधैर्निपीडितः ॥ ५२ ॥ हन्यमानस्ततः क्रूरै राक्षसैः कालमुष्टिभिः ॥ समीपं राक्षसेंद्रस्य प्राकृष्यत स वानरः ॥ ५३ ॥ अथेंद्रजित्तं प्रसमीक्ष्य मुक्तमस्त्रेण बद्धं द्रुमचीरसूत्रैः ॥ व्यदर्शयत्तत्र महाबलं तं हरिप्रवीरं सगणाय राज्ञे ॥ ५४ ॥ तं मत्तमिव मातंगं बद्धं कपिवरोत्तमम् ॥ राक्षसा राक्षसेंद्राय रावणाय न्यवेदयन् ॥ ५५ ॥ कोऽयं कस्य कुतो वाऽपि किं कार्यं कोऽस्युपाश्रयः ॥ इति राक्षसवीराणां तत्र संजज्ञिरे कथाः ॥ ५६ ॥ हन्यतां दह्यतां चापि भक्ष्यतामिति चापरे ॥ राक्षसास्तत्र संक्रुद्धाः परस्परमथाब्रुवन् ॥ ५७ ॥ अतीत्य मार्गं सहसा महात्मा स तत्र रक्षोधिपपादमूले ॥ ददर्श राज्ञः परिचारवृद्धान् गृहं महारत्नविभूषितं च ॥ ५८ ॥ स ददर्श महातेजा

रावणः कपिसत्तमम् ॥ रक्षोभिर्विकृताकारैः कृष्यमाणमितस्ततः ॥ ५९ ॥ राक्षसाधिपतिं चापि ददर्श कपिसत्तमः ॥ तेजोबलसमायुक्तं तपंतमिव भास्करम् ॥ ६० ॥ स रोषसंवर्तितताम्रदृष्टिर्दशाननस्तं कपिमन्ववेक्ष्य ॥ अथोपविष्टान्कुलशीलवृद्धान् समादिशत्तं प्रति मुख्यमंत्रीन् ॥ ६१ ॥ यथाक्रमं तैः स कपिश्च पृष्टः कार्यार्थमर्थस्य च मूलमादौ ॥ निवेदयामास हरीश्वरस्य दूतः सकाशाद्दमागतोऽस्मि ॥ ६२ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुंदरकांडेऽष्टचत्वारिंशः सर्गः ॥ ४८ ॥

---

## एकोनपंचाशः सर्गः ४९

ततः स कर्मणा तस्य विस्मितो भीमविक्रमः ॥ हनूमान्क्रोधताम्राक्षं रक्षोधिपमवैक्षत ॥ १ ॥ भ्राजमानं महार्हेण कांचनेन विराजता ॥ मुक्ताजालवृते-

नाथ मुकुटेन महाद्युतिम् ॥ २ ॥ वज्रसंयोगसंयुक्तैर्महार्हमणिविग्रहैः ॥ हैमै-
राभरणैश्चित्रैर्मनसेव प्रकल्पितैः ॥ ३ ॥ महार्हक्षौमसंवीतरक्तचंदनरूषितम् ॥
स्वनुलिप्तं विचित्राभिर्विविधाभिश्च भक्तिभिः ॥ ४ ॥ विचित्रं दर्शनीयैश्च रक्ताक्षै-
र्भीमदर्शनैः ॥ दीप्ततीक्ष्णमहादंष्ट्रं प्रलंबं दशनच्छदैः ॥ ५ ॥ शिरोभिर्दशभिर्वीरो
भ्राजमानं महौजसम् ॥ नानाव्यालसमाकीर्णैः शिखरैरिव मंदरम् ॥ ६ ॥ नीलां-
जनचयप्रख्यं हारेणोरसि राजता ॥ पूर्णचंद्राभवक्त्रेण सबालार्कमिवांबुदम् ॥ ७ ॥
बाहुभिर्बद्धकेयूरैश्चंदनोत्तमरूषितैः ॥ भ्राजमानांगदैः पीनैः पंचशीर्षैरिवोरगैः
॥ ८ ॥ महति स्फाटिके चित्रे रत्नसंयोगचित्रिते ॥ उत्तमास्तरणास्तीर्णे सूप-
विष्टं वरासने ॥ ९ ॥ अलंकृताभिरत्यर्थं प्रमदाभिः समंततः ॥ वालव्यजनहस्ता-
भिरारात्समुपसेवितम् ॥ १० ॥ दुर्धरेण प्रहस्तेन महापार्श्वेन रक्षसा ॥ मंत्रिभि-
र्मंत्रतत्त्वज्ञैर्निकुंभेन च मंत्रिणा ॥ ११ ॥ उपोपविष्टं रक्षोभिश्चतुर्भिर्बलदर्पितम् ॥
कृत्स्नं परिवृतं लोकं चतुर्भिरिव सागरैः ॥ १२ ॥ मंत्रिभिर्मंत्रतत्त्वज्ञैरन्यैश्च शुभ-

दर्शिभिः ॥ आश्वास्यमानं सचिवैः सुरैरिव सुरेश्वरम् ॥ १३ ॥ अपश्यद्राक्षसपतिं हनूमानतितेजसम् ॥ विष्ठितं मेरुशिखरे सतोयमिव तोयदम् ॥ १४ ॥ स तैः संपीड्यमानोऽपि रक्षोभिर्भीमविक्रमैः ॥ विस्मयं परमं गत्वा रक्षोधिपमवैक्षत ॥ १५ ॥ भ्राजमानं ततो दृष्ट्वा हनूमान्राक्षसेश्वरम् ॥ मनसा चिंतयामास तेजसा तस्य मोहितः ॥१६॥ अहो रूपमहो धैर्यमहो सत्त्वमहो द्युतिः ॥ अहो राक्षसराजस्य सर्वलक्षणयुक्तता ॥ १७ ॥ यद्यधर्मो न बलवान् स्यादयं राक्षसेश्वरः ॥ स्यादयं सुरलोकस्य सशक्रस्यापि रक्षिता ॥ १८ ॥ अस्य क्रूरैर्नृशंसैश्च कर्मभिर्लोककुत्सितैः ॥ सर्वे बिभ्यति खल्वस्माल्लोकाः सामरदानवाः ॥ १९ ॥ अयं ह्युत्सहते क्रुद्धः कर्तुमेकार्णवं जगत् ॥ इति चिंतां बहुविधामकरोन्मतिमान्कपिः ॥ दृष्ट्वा राक्षसराजस्य प्रभावममितौजसः ॥ २० ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुंदरकांडे एकोनपंचाशः सर्गः ॥४९॥

## पंचाशः सर्गः ५०

तमुद्वीक्ष्य महाबाहुः पिंगाक्षं पुरतः स्थितम् ॥ रोषेण महताविष्टो रावणो लोकरावणः ॥ १ ॥ शंकाहतात्मा दध्यौ स कपींद्रं तेजसा वृतम् ॥ किमेष भगवान्नंदी भवेत्साक्षादिहागतः ॥ २ ॥ येन शप्तोऽस्मि कैलासे मया संचालिते पुरा ॥ सोऽयं वानरमूर्तिः स्यात्किंस्विद्बाणोऽपि वाऽसुरः ॥ ३ ॥ स राजा रोषताम्राक्षः प्रहस्तं मंत्रिसत्तमम् ॥ कालयुक्तमुवाचेदं वचो विपुलमर्थवत् ॥ ४ ॥ दुरात्मा पृच्छ्यतामेष कुतः किं वास्य कारणम् ॥ वनभंगे च कोऽस्यार्थो राक्षसानां च तर्जने ॥ ५ ॥ मत्पुरीमप्रधृष्यां वै गमने किं प्रयोजनम् ॥ आयोधने वा किं कार्यं पृच्छ्यतामेष दुर्मतिः ॥ ६ ॥ रावणस्य वचः श्रुत्वा प्रहस्तो वाक्यमब्रवीत् ॥ समाश्वसिहि भद्रं ते न भीः कार्या त्वया कपे ॥ ७ ॥ यदि तावत्त्वमिंद्रेण प्रेषितो रावणालयम् ॥ तत्त्वमाख्याहि मा ते भूद्भयं वानर

मोक्ष्यसे ॥ ८ ॥ यदि वैश्रवणस्य त्वं यमस्य वरुणस्य वा ॥ चाररूपमिदं कृत्वा प्रविष्टो नः पुरीमिमाम् ॥ विष्णुना प्रेषितो वापि दूतो विजयकांक्षिणा ॥ ९ ॥ नहि ते वानरं तेजो रूपमात्रं तु वानरम् ॥ तत्त्वतः कथयस्वाद्य ततो वानर मोक्ष्यसे ॥ १० ॥ अनृतं वदतश्चापि दुर्लभं तव जीवितम् ॥ अथवा यन्निमित्तस्ते प्रवेशो रावणालये ॥ ११ ॥ एवमुक्तो हरिवरस्तदा रक्षोगणेश्वरम् ॥ अब्रवीन्नास्मि शक्रस्य यमस्य वरुणस्य च ॥ १२ ॥ धनदेन न मे सख्यं विष्णुना नास्मि चोदितः ॥ जातिरेव मम त्वेषा वानरोऽहमिहागतः ॥ १३ ॥ दर्शने राक्षसेंद्रस्य तदिदं दुर्लभं मया ॥ वनं राक्षसराजस्य दर्शनार्थे विनाशितम् ॥१४॥ ततस्ते राक्षसाः प्राप्ता बलिनो युद्धकांक्षिणः ॥ रक्षणार्थं च देहस्य प्रतियुद्धा मया रणे ॥ १५ ॥ अस्त्रपाशैर्न शक्योऽहं बद्धुं देवासुरैरपि ॥ पितामहादेष वरो ममापि हि समागतः ॥ १६ ॥ राजानं द्रष्टुकामेन मयास्त्रमनुवर्तितम् ॥ विमुक्तोऽप्यहमस्त्रेण राक्षसैस्त्वभिवेदितः ॥ १७ ॥ केनचिद्राजकार्येण आगतोऽस्मि

तवांतिकम् ॥ दूतोऽहमिति विज्ञाय राघवस्यामितौजसः ॥ १८ ॥ श्रूयतामेव वचनं मम पथ्यमिदं प्रभो ॥ १९ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदि-काव्ये सुंदरकांडे पंचाशः सर्गः ॥ ५० ॥

---

## एकपंचाशः सर्गः ५१

तं समीक्ष्य महासत्त्वं सत्त्ववान्हरिसत्तमः ॥ वाक्यमर्थवदव्यग्रस्तमुवाच दशाननम् ॥१॥ अहं सुग्रीवसंदेशादिह प्राप्तस्तवान्तिके ॥ राक्षसेश हरीशस्त्वां भ्राता कुशलमब्रवीत् ॥ २ ॥ भ्रातुः शृणु समादेशं सुग्रीवस्य महात्मनः ॥ धर्मार्थसहितं वाक्यमिह चामुत्र च क्षमम् ॥ ३ ॥ राजा दशरथो नाम रथ-कुंजरवाजिमान् ॥ पितेव बंधुर्लोकस्य सुरेश्वरसमद्युतिः ॥४॥ ज्येष्ठस्तस्य महा-बाहुः पुत्रः प्रियतरः प्रभुः ॥ पितुर्निदेशान्निष्क्रांतः प्रविष्टो दंडकावनम् ॥ ५ ॥

लक्ष्मणेन सह भ्रात्रा सीतया सह भार्यया ॥ रामो नाम महातेजा धर्म्यं पंथानमाश्रितः ॥ ६ ॥ तस्य भार्या जनस्थाने भ्रष्टा सीतेति विश्रुता ॥ वैदेहस्य सुता राज्ञो जनकस्य महात्मनः ॥ ७ ॥ मार्गमाणस्तु तां देवीं राजपुत्रः सहानुजः ॥ ऋष्यमूकमनुप्राप्तः सुग्रीवेण च संगतः ॥ ८ ॥ तस्य तेन प्रतिज्ञातं सीतायाः परिमार्गणम् ॥ सुग्रीवस्यापि रामेण हरिराज्यं निवेदितुम् ॥ ९ ॥ ततस्तेन मृधे हत्वा राजपुत्रेण वालिनम् ॥ सुग्रीवः स्थापितो राज्ये हर्यृक्षाणां गणेश्वरः ॥ १० ॥ त्वया विज्ञातपूर्वश्च वाली वानरपुंगवः ॥ स तेन निहतः संख्ये शरेणैकेन वानरः ॥ ११ ॥ स सीतामार्गणे व्यग्रः सुग्रीवः सत्यसंगरः ॥ हरीन्संप्रेषयामास दिशः सर्वा हरीश्वरः ॥१२॥ तां हरीणां सहस्राणि शतानि नियुतानि च ॥ दिक्षु सर्वासु मार्गंते ह्यधश्चोपरि चांबरे ॥ १३ ॥ वैनतेयसमाः केचित्केचित्तत्रानिलोपमाः ॥ असंगगतयः शीघ्रा हरिवीरा महाबलाः ॥ १४ ॥ अहं तु हनुमान्नाम मारुतस्यौरसः सुतः ॥ सीतायास्तु कृते तूर्णं शतयोजनमा-

यतम् ॥ १५ ॥ समुद्रं लंघयित्वैव तां दिदृक्षुरिहागतः ॥ भ्रमता च मया दृष्टा गृहे ते जनकात्मजा ॥१६॥ तद्भवान्दृष्टधर्मार्थस्तपःकृतपरिग्रहः ॥ परदारान्महाप्राज्ञ नोपरोद्धुं त्वमर्हसि ॥ १७ ॥ नहि धर्मविरुद्धेषु बह्वपायेषु कर्मसु ॥ मूलघातिषु सज्जंते बुद्धिमंतो भवद्विधाः ॥१८॥ कश्च लक्ष्मणमुक्तानां रामकोपानुवर्तिनाम् ॥ शराणामग्रतः स्थातुं शक्तो देवासुरेष्वपि ॥ १९ ॥ न चापि त्रिषु लोकेषु राजन्विद्येत कश्चन ॥ राघवस्य व्यलीकं यः कृत्वा सुखमवाप्नुयात् ॥ २० ॥ तत्त्रिकालहितं वाक्यं धर्म्यमर्थानुयायि च ॥ मन्यस्व नरशार्दूले जानकी प्रतिदीयताम् ॥ २१ ॥ दृष्टा हीयं मया देवी लब्धं यदिह दुर्लभम् ॥ उत्तरं कर्म यच्छेषं निमित्तं तत्र राघवः ॥२२॥ लक्षितेयं मया सीता तथा शोकपरायणा ॥ गृहे यां नाभिजानासि पंचास्यामिव पन्नगीम् ॥ २३ ॥ नेयं जरयितुं शक्या सासुरैरमरैरपि ॥ विषसंसृष्टमत्यर्थं भुक्तमन्नमिवौजसा ॥ २४ ॥ तपःसंतापलब्धस्ते सोऽयं धर्मपरिग्रहः ॥ न स नाशयितुं न्याय्य आत्मप्राणपरिग्रहः ॥२५॥

अवध्यतां तपोभिर्यां भवान्समनुपश्यति ॥ आत्मनः सासुरैर्देवैर्हेतुस्तत्राप्ययं महान् ॥ २६ ॥ सुग्रीवो न च देवोऽयं नासुरो न च राक्षसः ॥ न दानवो न गंधर्वो न यक्षो न च पन्नगः ॥ मानुषो राघवो राजन्सुग्रीवश्च हरीश्वरः ॥ तस्मात्प्राणपरित्राणं कथं राजन्करिष्यसि ॥ २७ ॥ न तु धर्मोपसंहारमधर्मफल-संहितम् ॥ तदेव फलमन्वेति धर्मश्चाधर्मनाशनः ॥ २८ ॥ प्राप्तं धर्मफलं ताव-द्भवता नात्र संशयः ॥ फलमस्याप्यधर्मस्य क्षिप्रमेव प्रपत्स्यसे ॥ २९ ॥ जन-स्थानवधं बुद्ध्वा वालिनश्च वधं तथा ॥ राम सुग्रीवसख्यं च बुध्यस्व हितमा-त्मनः ॥ ३० ॥ कामं खल्वहमप्येकः सवाजिरथकुंजराम् ॥ लंकां नाशयितुं शक्तस्तस्यैष तु न निश्चयः ॥ ३१ ॥ रामेण हि प्रतिज्ञातं हर्यृक्षगणसंनिधौ ॥ उत्सादनममित्राणां सीता यैस्तु प्रधर्षिता ॥ ३२ ॥ अपकुर्वन्हि रामस्य साक्षा-दपि पुरंदरः ॥ न सुखं प्राप्नुयादन्यः किं पुनस्त्वद्विधो जनः ॥ ३३ ॥ यां सीतेत्यभिजानासि येयं तिष्ठति ते गृहे ॥ कालरात्रीति तां विद्धि सर्वलंका-

विनाशिनीम् ॥ ३४ ॥ तदलं कालपाशेन सीताविग्रहरूपिणा ॥ स्वयं स्कंधावसक्तेन क्षेममात्मनि चिंत्यताम् ॥ ३५ ॥ सीतायास्तेजसा दग्धां रामकोपप्रदीपिताम् ॥ दह्यमानामिमां पश्य पुरीं साट्टप्रतोलिकाम् ॥३६॥ मंत्रींश्च स्वानि मित्राणि ज्ञातीन्भ्रातॄन्सुतान्हितान् ॥ भोगान्दारांश्च लंकां च मा विनाशमुपानय ॥ ३७ ॥ सत्यं राक्षसराजेंद्र शृणुष्व वचनं मम ॥ रामदासस्य दूतस्य वानरस्य विशेषतः ॥ ३८ ॥ सर्वांल्लोकान्सुसंहृत्य सभूतान्सचराचरान् ॥ पुनरेव तथा स्रष्टुं शक्तो रामो महायशाः ॥ ३९ ॥ देवासुरनरेंद्रेषु यक्षरक्षोरगेषु च ॥ विद्याधरेषु नागेषु गंधर्वेषु मृगेषु च ॥ सिद्धेषु किन्नरेंद्रेषु पतत्रिषु च सर्वतः ॥ ४० ॥ सर्वत्र सर्वभूतेषु सर्वलोकेषु नास्ति सः ॥ यो रामं प्रति युध्येत विष्णुतुल्यपराक्रमम् ॥४१॥ सर्वलोकेश्वरस्येह कृत्वा विप्रियमीदृशम् ॥ रामस्य राजसिंहस्य दुर्लभं तव जीवितम् ॥ ४२ ॥ देवाश्च दैत्याश्च निशाचरेंद्र गंधर्वविद्याधरनागयक्षाः ॥ रामस्य लोकत्रयनायकस्य स्थातुं न शक्ताः सम-

रेषु सर्वे ॥ ४३ ॥ ब्रह्मा स्वयंभूश्चतुराननो वा रुद्रस्त्रिनेत्रस्त्रिपुरांतको वा ॥ इंद्रो महेंद्रः सुरनायको वा त्रातुं न शक्ता युधि राघवस्य ॥ ४४ ॥ स सौष्ठवोपेतमदीनवादिनः कपेर्निशम्याप्रतिमोऽप्रियं वचः ॥ दशाननः कोपविवृत्तलोचनः समादिशत्तस्य वधं महाकपेः ॥ ४५ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुंदरकांड एकपंचाशः सर्गः ॥ ५१ ॥

---

## द्विपंचाशः सर्गः ५२

स तस्य वचनं श्रुत्वा वानरस्य महात्मनः ॥ आज्ञापयद्वधं तस्य रावणः क्रोधमूर्च्छितः ॥ १ ॥ वधे तस्य समाज्ञप्ते रावणेन दुरात्मना ॥ निवेदितवतो दौत्यं नानुमेने विभीषणः ॥ २ ॥ तं रक्षोधिपतिं क्रुद्धं तच्च कार्यमुपस्थितम् ॥ विदित्वा चिंतयामास कार्यं कार्यविधौ स्थितः ॥ ३ ॥ निश्चितार्थस्ततः साम्ना

पूज्यं शत्रुजिदग्रजम् ॥ उवाच हितमत्यर्थं वाक्यं वाक्यविशारदः ॥ ४ ॥ क्षमस्व रोषं त्यज राक्षसेंद्र प्रसीद मे वाक्यमिदं शृणुष्व ॥ वधं न कुर्वंति परावरज्ञा दूतस्य संतो वसुधाधिपेंद्राः ॥ ५ ॥ राजन्धर्मविरुद्धं च लोकवृत्तेश्च गर्हितम् ॥ तव चासदृशं वीर कपेरस्य प्रमापणम् ॥ ६ ॥ धर्मज्ञश्च कृतज्ञश्च राजधर्मविशारदः ॥ परावरज्ञो भूतानां त्वमेव परमार्थवित् ॥ ७ ॥ गृह्यंते यदि रोषेण त्वादृशोऽपि विपश्चितः ॥ ततः शास्त्रविपश्चित्त्वं श्रम एव हि केवलम् ॥ ८ ॥ तस्मात्प्रसीद शत्रुघ्न राक्षसेंद्र दुरासद ॥ युक्तायुक्तं विनिश्चित्य दूतदंडो विधीयताम् ॥ ९ ॥ विभीषणवचः श्रुत्वा रावणो राक्षसेश्वरः ॥ कोपेन महताविष्टो वाक्यमुत्तरमब्रवीत् ॥ १० ॥ न पापानां वधे पापं विद्यते शत्रुसूदन ॥ तस्मादेनं वधिष्यामि वानरं पापकारिणम् ॥ ११ ॥ अधर्ममूलं बहुदोषयुक्तमनार्यजुष्टं वचनं निशम्य ॥ उवाच वाक्यं परमार्थतत्त्वं विभीषणो बुद्धिमतां वरिष्ठः ॥ १२ ॥ प्रसीद लंकेश्वर राक्षसेंद्र धर्मार्थतत्त्वं वचनं शृणुष्व ॥ दूता न वध्याः

समयेषु राजन्सर्वेषु सर्वत्र वदंति संतः ॥ १३ ॥ असंशयं शत्रुरयं प्रवृद्धः कृतं ह्यनेनाप्रियमप्रमेयम् ॥ न दूतवध्यां प्रवदंति संतो दूतस्य दृष्टा बहवो हि दंडाः ॥ १४ ॥ वैरूप्यमंगेषु कशाभिघातो मौंड्यं तथा लक्षणसन्निपातः ॥ एतान्हि दूते प्रवदंति दंडान्वधस्तु दूतस्य न नः श्रुतोऽस्ति ॥ १५ ॥ कथं च धर्मार्थविनीतबुद्धिः परावरप्रत्ययनिश्चितार्थः ॥ भवद्विधः कोपवशे हि तिष्ठेत्कोपं न गच्छंति हि सत्त्ववंतः ॥ १६ ॥ न धर्मवादे न च लोकवृत्ते न शास्त्रबुद्धिग्रहणेषु वापि ॥ विद्येत कश्चित्तव वीर तुल्यस्त्वं ह्युत्तमः सर्वसुरासुराणाम् ॥ १७ ॥ पराक्रमोत्साहमनस्विनां च सुरासुराणामपि दुर्जयेन ॥ त्वयाप्रमेयेण सुरेंद्रसंघा जिताश्च युद्धेष्वसकृन्नरेंद्राः ॥ १८ ॥ इत्थंविधस्यामरदैत्यशत्रोः शूरस्य वीरस्य तवाजितस्य ॥ कुर्वंति वीरा मनसाप्यलीकं प्राणैर्विमुक्ता न तु भोः पुरा ते ॥ १९ ॥ न चाप्यस्य कपेर्घाते कंचित्पश्याम्यहं गुणम् ॥ तेष्वयं पात्यतां दंडो यैरयं प्रेपितः कपिः ॥ २० ॥ साधुर्वा यदि वाऽसाधुः

परैरेष समर्पितः ॥ ब्रुवन्परार्थं परवान्न दूतो वधमर्हति ॥ २१ ॥ अपि चास्मिन्हते नान्यं राजन्पश्यामि खेचरम् ॥ इह यः पुनरागच्छेत्परं पारं महोदधेः ॥ २२ ॥ तस्मान्नास्य वधे यत्नः कार्यः परपुरंजय ॥ भवान्सेंद्रेषु देवेषु यत्नमास्थातुमर्हति ॥ २३ ॥ अस्मिन्विनष्टे नहि दूतमन्यं पश्यामि यस्तौ नरराजपुत्रौ ॥ युद्धाय युद्धप्रिय दुर्विनीतावुद्योजयेद्दै भवता विरुद्धौ ॥ २४ ॥ अस्मिन्हते वानरयूथमुख्ये सर्वापवादं प्रवदंति संतः ॥ नहि प्रपश्यामि गुणान्यतो वा लोकापवादो भवति प्रसिद्धः ॥ २५ ॥ मूढैः प्रगल्भैरपि दुर्विनीतैर्येर्वानरोऽयं पुरुषैर्विसृष्टः ॥ तेषां वधार्थं कुरु वीर यत्नं शीघ्रं विनाशाय निशाचरेंद्र ॥ २६ ॥ कुरुष्व तावत्परमं प्रयत्नं धर्मं समासाद्य नरेंद्रशत्रो ॥ देवेषु सेंद्रेषु सपावकेषु दैत्येषु सर्वेषु सदानवेषु ॥ २७ ॥ कृत्वा प्रयत्नं सुदृढं सुशीघ्रं मद्वाक्यमेतन्मनसानुगृह्य ॥ तौ राजपुत्रौ विनिगृह्य मूढौ जयं परं प्राप्स्यसि राक्षसेंद्र ॥ २८ ॥ पराक्रमोत्साहमनस्विनां च सुरासुराणामपि दुर्जयेन ॥ त्वया मनोनंदन

नैर्ऋतानां युद्धाय निर्णाशयितुं न युक्तम् ॥ २९ ॥ हिताश्च शूराश्च समाहिताश्च कुलेषु जाताश्च महागुणेषु ॥ मनस्विनः शस्त्रभृतां वरिष्ठाः कोट्यग्रशस्ते सुभृताश्च योधाः ॥ ३० ॥ तदेकदेशेन बलस्य तावत्केचित्तवादेशकृतोऽपयांतु ॥ तौ राजपुत्रावुपगृह्य मूढौ परेषु ते भावयितुं प्रभावम् ॥ ३१ ॥ निशाचराणामधिपोऽनुजस्य विभीषणस्योत्तमवाक्यमिष्टम् ॥ जग्राह बुद्ध्या सुरलोकशत्रुर्महाबलो राक्षसराजमुख्यः ॥ ३२ ॥ दध्यौ पुनस्तं प्रति वानरेंद्रं स राक्षसेंद्रो मतिमान्महात्मा ॥ किंवाद्भुतं ब्रह्मण एव तेजः सर्वस्य धातुर्जगतोऽथ विष्णोः ॥ यद्देवदेवस्य परस्य तेजस्तदेव किंवा कपिरूप एषः ॥ ३३ ॥ वधाय मे वैष्णवमेव तेजः किमागतं वानररूपधारि ॥ इत्येवमेतद्बहुधा विचिंत्य रक्षोधिपः क्रोधवशं जगाम ॥ ३४ ॥ क्रोधं च जातं हृदये निरुध्य विभीषणोक्तं वचनं सुपूज्य ॥ उवाच रक्षोधिपतिर्महात्मा विभीषणं धर्मभृतां वरिष्ठम् ॥ ३५ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुंदरकांडे द्विपंचाशः सर्गः ॥ ५२ ॥

## त्रिपंचाशः सर्गः ५३

तस्य तद्वचनं श्रुत्वा दशग्रीवो महात्मनः ॥ देशकालहितं वाक्यं भ्रातुरुत्तरमब्रवीत् ॥ १ ॥ सम्यगुक्तं हि भवता दूतवध्या विगर्हिता ॥ अवश्यं तु वधादन्यः क्रियतामस्य निग्रहः ॥ २ ॥ कपीनां किल लांगूलमिष्टं भवति भूषणम् ॥ तदस्य दीप्यतां शीघ्रं तेन दग्धेन गच्छतु ॥ ३ ॥ ततः पश्यंत्वमुं दीनमंगवैरूप्यकर्शितम् ॥ सुमित्रज्ञातयः सर्वे बांधवाः ससुहृज्जनाः ॥ ४ ॥ आज्ञापयद्राक्षसेंद्रः पुरं सर्वं सचत्वरम् ॥ लांगूलेन प्रदीप्तेन रक्षोभिः परिणीयताम् ॥ ५ ॥ तस्य तद्वचनं श्रुत्वा राक्षसाः कोपकर्कशाः ॥ वेष्टंते तस्य लांगूलं जीर्णैः कार्पासकैः पटैः ॥६॥ संवेष्ट्यमाने लांगूले व्यवर्धत महाकपिः ॥ शुष्कमिंधनमासाद्य वनेष्विव हुताशनः ॥ तैलेन परिषिच्याथ तेऽग्निं तत्रोपपादयन् ॥ ७ ॥ लांगूलेन प्रदीप्तेन राक्षसांस्तानताडयत् ॥ रोषामर्षपरीतात्मा बालसूर्यसमाननः

॥ ८ ॥ लांगूलं संप्रदीप्तं तु दृष्ट्वा सर्वे हनूमतः ॥ सहस्त्रीबालवृद्धाश्च जग्मुः प्रीतिं निशाचराः ॥ ९ ॥ स भूयः संगतैः क्रूरै राक्षसैः कपिसत्तमः ॥ निबद्धः कृतवान्वीरस्तत्कालसदृशीं मतिम् ॥ १० ॥ कामं खलु न मे शक्ता निबद्धस्यापि राक्षसाः ॥ छित्त्वा पाशान्समुत्पत्य हन्यामहमिमान्पुनः ॥ ११ ॥ यदि भर्तृहितार्थाय चरंतं भर्तृशासनात् ॥ निबध्नंते दुरात्मानो न तु मे निष्कृतिः कृता ॥ १२ ॥ सर्वेषामेव पर्याप्तो राक्षसानामहं युधि ॥ किंतु रामस्य प्रीत्यर्थं विषहिष्येऽहमीदृशम् ॥ १३ ॥ लंका चारयितव्या वै पुनरेव भवेदिति ॥ रात्रौ नहि सुदृष्टा मे दुर्गकर्मविधानतः ॥ १४ ॥ अवश्यमेव द्रष्टव्या मया लंका निशाक्षये ॥ १५ ॥ कामं बध्नंतु मे भूयः पुच्छस्योद्दीपनेन च ॥ पीडां कुर्वंतु रक्षांसि न मेऽस्ति मनसः श्रमः ॥ १६ ॥ ततस्ते संवृताकारं सत्त्ववंतं महाकपिम् ॥ परिगृह्य ययुर्हृष्टा राक्षसाः कपिकुंजरम् ॥ १७ ॥ शंखभेरीनिनादैश्च घोषयंतः स्वकर्मभिः ॥ राक्षसाः क्रूरकर्माणश्चारयंति स्म तां पुरीम् ॥ १८ ॥

अन्वीयमानो रक्षोभिर्ययौ सुखमरिंदमः ॥ हनूमांश्चारयामास राक्षसानां महापुरीम् ॥ १९ ॥ यथापश्यद्विमानानि विचित्राणि महाकपिः ॥ संवृतान्भूमिभागांश्च सुविभक्तांश्च चत्वरान् ॥ २० ॥ रथ्याश्च गृहसंबाधाः कपिः शृंगाटकानि च ॥ तथा रथ्योपरथ्याश्च तथैव च गृहांतरान् ॥ २१ ॥ चत्वरेषु चतुष्केषु राजमार्गे तथैव च ॥ घोषयंति कपिं सर्वे चार इत्येव राक्षसाः ॥ २२ ॥ स्त्रीबालवृद्धा निर्जग्मुस्तत्र तत्र कुतूहलात् ॥ तं प्रदीपितलांगूलं हनूमंतं दिदृक्षवः ॥ २३ ॥ दीप्यमाने ततस्तस्य लांगूलाग्रे हनूमतः ॥ राक्षस्यस्ता विरूपाक्ष्यः शंसुर्देव्यास्तदप्रियम् ॥ २४ ॥ यस्त्वया कृतसंवादः सीते ताम्रमुखः कपिः ॥ लांगूलेन प्रदीप्तेन स एष परिणीयते ॥ २५ ॥ श्रुत्वा तद्वचनं क्रूरमात्मापहरणोपमम् ॥ वैदेही शोकसंतप्ता हुताशनमुपागमत् ॥ २६ ॥ मंगलाभिमुखी तस्य सा तदासीन्महाकपेः ॥ उपतस्थे विशालाक्षी प्रयता हव्यवाहनम् ॥२७॥ यद्यस्ति पतिशुश्रूषा यद्यस्ति चरितं तपः ॥ यदि चास्त्येकपत्नीत्वं शीतो

भव हनूमतः ॥ २८ ॥ यदि कश्चिदनुक्रोशस्तस्य मय्यस्ति धीमतः ॥ यदि वा भाग्यशेषो मे शीतो भव हनूमतः ॥ २९ ॥ यदि मां वृत्तसंपन्नां तत्समागमलालसाम् ॥ स विजानाति धर्मात्मा शीतो भव हनूमतः ॥ ३० ॥ यदि मां तारयेदार्यः सुग्रीवः सत्यसंगरः ॥ अस्माद्दुःखांबुसंरोधाच्छीतो भव हनूमतः ॥ ३१ ॥ ततस्तीक्ष्णार्चिरव्यग्रः प्रदक्षिणशिखोऽनलः ॥ जज्वाल मृगशावाक्ष्याः शंसन्निव शुभं कपेः ॥ ३२ ॥ हनूमज्जनकश्चैव पुच्छानलयुतोऽनिलः ॥ ववौ स्वास्थ्यकरो देव्याः प्रालेयानिलशीतलः ॥ ३३ ॥ दह्यमाने च लांगूले चिंतयामास वानरः ॥ प्रदीप्तोऽग्निरयं कस्मान्न मां दहति सर्वतः ॥ ३४ ॥ दृश्यते च महाज्वालः करोति च न मे रुजम् ॥ शिशिरस्येव संपातो लांगूलाग्रे प्रतिष्ठितः ॥ ३५ ॥ अथवा तदिदं व्यक्तं यद्दृष्टं प्लवता मया ॥ रामप्रभावादाश्चर्यं पर्वतः सरितां पतौ ॥ ३६ ॥ यदि तावत्समुद्रस्य मैनाकस्य च धीमतः ॥ रामार्थं संभ्रमस्तादृक्किमग्निर्न करिष्यति ॥३७॥ सीतायाश्चानृशंस्येन तेजसा राघवस्य च ॥

पितुश्च मम सख्येन न मां दहति पावकः ॥ ३८ ॥ भूयः स चिंतयामास मुहूर्तं कपिकुंजरः ॥ कथमस्मद्विधस्येह बंधनं राक्षसाधमैः ॥ प्रतिक्रियास्य युक्ता स्यात्सति मह्यं पराक्रमे ॥३९॥ ततश्छित्त्वा च तान्पाशान्वेगवान्वै महाकपिः ॥ उत्पपाताथ वेगेन ननाद च महाकपिः ॥ ४० ॥ पुरद्वारं ततः श्रीमाञ्छैलशृंगमिवोन्नतम् ॥ विभक्तरक्षःसंबाधमाससादानिलात्मजः ॥ ४१ ॥ स भूत्वा शैलसंकाशः क्षणेन पुनरात्मवान् ॥ ह्रस्वतां परमां प्राप्तो बंधनान्यवशातयत् ॥४२॥ विमुक्तश्चाभवच्छ्रीमान्पुनः पर्वतसंनिभः ॥ वीक्षमाणश्च ददृशे परिघं तोरणाश्रितम् ॥ ४३ ॥ स तं गृह्य महाबाहुः कालायसपरिष्कृतम् ॥ रक्षिणस्तान्पुनः सर्वान्सूदयामास मारुतिः ॥४४॥ स तान्निहत्वा रणचंडविक्रमः समीक्षमाणः पुनरेव लंकाम् ॥ प्रदीप्तलांगूलकृतार्चिमाली प्रकाशितादित्य इवार्चिमाली॥४५॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुंदरकांडे त्रिपंचाशः सर्गः ॥५३॥

## चतुःपंचाशः सर्गः ५४

वीक्षमाणस्ततो लंकां कपिः कृतमनोरथः ॥ वर्धमानसमुत्साहः कार्यशेषमचिंतयत् ॥ १ ॥ किं नु खल्ववशिष्टं मे कर्तव्यमिह सांप्रतम् ॥ यदेषां रक्षसां भूयः संतापजननं भवेत् ॥ २ ॥ वनं तावत्प्रमथितं प्रकृष्टा राक्षसा हताः ॥ बलैकदेशः क्षपितः शेषं दुर्गविनाशनम् ॥ ३ ॥ दुर्गे विनाशिते कर्म भवेत्सुखपरिश्रमम् ॥ अल्पयत्नेन कार्येऽस्मिन्मम स्यात्सफलः श्रमः ॥ ४ ॥ यो ह्ययं मम लांगूले दीप्यते हव्यवाहनः ॥ अस्य संतर्पणं न्याय्यं कर्तुमेभिर्गृहोत्तमैः ॥ ५ ॥ ततः प्रदीप्तलांगूलः सविद्युदिव तोयदः ॥ भवनाग्रेषु लंकाया विचचार महाकपिः ॥ ६ ॥ गृहाद्गृहं राक्षसानामुद्यानानि च सर्वशः ॥ वीक्षमाणो ह्यसंत्रस्तः प्रासादांश्च चचार सः ॥७॥ अवप्लुत्य महावेगः प्रहस्तस्य निवेशनम् ॥ अग्निं तत्र विनिक्षिप्य श्वसनेन समो बली ॥ ८ ॥ ततोऽन्यत्पुप्लुवे वेश्म महा-

पार्श्वस्य वीर्यवान् ॥ मुमोच हनुमानग्निं कालानलशिखोपमम् ॥९॥ वज्रदंष्ट्रस्य च तथा पुप्लुवे स महाकपिः ॥ शुकस्य च महातेजाः सारणस्य च धीमतः ॥ तथा चेंद्रजितो वेश्म ददाह हरियूथपः ॥१०॥ जंबुमालेः सुमालेश्च ददाह भवनं ततः ॥११॥ रश्मिकेतोश्च भवनं सूर्यशत्रोस्तथैव च ॥ ह्रस्वकर्णस्य दंष्ट्रस्य रोमशस्य च रक्षसः ॥ १२ ॥ युद्धोन्मत्तस्य मत्तस्य ध्वजग्रीवस्य रक्षसः ॥ विद्युज्जिह्वस्य घोरस्य तथा हस्तिमुखस्य च ॥ १३ ॥ करालस्य विशालस्य शोणिताक्षस्य चैव हि ॥ कुंभकर्णस्य भवनं मकराक्षस्य चैव हि ॥१४॥ नरांतकस्य कुंभस्य निकुंभस्य महात्मनः ॥ यज्ञशत्रोश्च भवनं ब्रह्मशत्रोस्तथैव च ॥ १५॥ वर्जयित्वा महातेजा विभीषणगृहं प्रति ॥ क्रममाणः क्रमेणैव ददाह हरिपुंगवः ॥ १६ ॥ तेषु तेषु महार्हेषु भवनेषु महायशाः ॥ गृहेष्वृद्धिमतामृद्धिं ददाह कपिकुंजरः ॥ १७ ॥ सर्वेषां समतिक्रम्य राक्षसेन्द्रस्य वीर्यवान् ॥ आससादाथ लक्ष्मीवान्रावणस्य निवेशनम् ॥१८॥ ततस्तस्मिन्गृहे मुख्ये नानारत्नविभूषिते ॥ मेरुमंदरसंकाशे

नानामंगलशोभिते ॥ १९ ॥ प्रदीप्तमग्निमुत्सृज्य लांगूलाग्रे प्रतिष्ठितम् ॥ ननाद हनुमान्वीरो युगांतजलदो यथा ॥ २० ॥ श्वसनेन च संयोगादतिवेगो महाबलः ॥ कालाग्निरिव जज्वाल प्रावर्धत हुताशनः ॥ २१ ॥ प्रदीप्तमग्निं पवनस्तेषु वेश्मसु चारयन् ॥ अभूच्छ्वसनसंयोगादतिवेगो हुताशनः ॥ २२ ॥ तानि कांचनजालानि मुक्तामणिमयानि च ॥ भवनानि व्यशीर्यंत रत्नवंति महांति च ॥ २३ ॥ तानि भग्नविमानानि निपेतुर्वसुधातले ॥ भवनानीव सिद्धानामंबरात्पुण्यसंक्षये ॥ २४ ॥ संजज्ञे तुमुलः शब्दो राक्षसानां प्रधावताम् ॥ स्वे स्वे गृहपरित्राणे भग्नोत्साहोज्झितश्रियाम् ॥ नूनमेषोऽग्निरायातः कपिरूपेण हा इति ॥ २५ ॥ क्रंदंत्यः सहसा पेतुः स्तनंधयधराः स्त्रियः ॥ काश्चिदग्निपरीताङ्ग्यो हर्म्येभ्यो मुक्तमूर्धजाः ॥ २६ ॥ पतंत्यो रेजिरेऽभ्रेभ्यः सौदामिन्य इवांबरात् ॥ २७ ॥ वज्रविद्रुमवैदूर्यमुक्तारजतसंहतान् ॥ विचित्रान्भवनाद्धातून्स्यंदमानान्ददर्श सः ॥२८॥ नाग्निस्तृप्यति काष्ठानां तृणानां च यथा तथा ॥

हनूमान्राक्षसेन्द्राणां वधे किंचिन्न तृप्यति ॥ न हनूमद्विशस्तानां राक्षसानां वसुंधरा ॥ २९ ॥ कचित्किंशुकसंकाशाः कचिच्छाल्मलिसंनिभाः ॥ कचित्कुंकुमसंकाशाः शिखा वह्नेश्चकाशिरे ॥ ३० ॥ हनूमता वेगवता वानरेण महात्मना ॥ लंकापुरं प्रदग्धं तद्रुद्रेण त्रिपुरं यथा ॥ ३१ ॥ ततः स लंकापुरपर्वताग्रे समुत्थितो भीमपराक्रमोऽग्निः ॥ प्रसार्य चूडावलयं प्रदीप्तो हनूमता वेगवतोपसृष्टः ॥ ३२ ॥ युगांतकालानलतुल्यरूपः स मारुतोऽग्निर्ववृधे दिवस्पृक् ॥ विधूमरश्मिर्भवनेषु सक्तो रक्षःशरीराज्यसमर्पितार्चिः ॥ ३३ ॥ आदित्यकोटीसदृशः सुतेजा लंकां समस्तां परिवार्य तिष्ठन् ॥ शब्दैरनेकैरशनिप्ररूढैर्भिन्दन्निवांडं प्रबभौ महाग्निः ॥ ३४ ॥ तत्रांबरादग्निरतिप्रवृद्धो रूक्षप्रभः किंशुकपुष्पचूडः ॥ निर्वाणधूमाकुलराजयश्च नीलोत्पलाभाः प्रचकाशिरेऽभ्राः ॥ ३५ ॥ वज्री महेंद्रस्त्रिदशेश्वरो वा साक्षाद्यमो वा वरुणोऽनिलो वा ॥ रुद्रोऽग्निरर्को धनदश्च सोमो न वानरोऽयं स्वयमेव कालः ॥३६॥

किं ब्रह्मणः सर्वपितामहस्य लोकस्य धातुश्चतुराननस्य ॥ इहागतो वानररूपधारी रक्षोपसंहारकरः प्रकोपः ॥३७॥ किं वैष्णवं वा कपिरूपमेत्य रक्षोविनाशाय परं सुतेजः ॥ अचिंत्यमव्यक्तमनंतमेकं स्वमायया सांप्रतमागतं वा ॥३८॥ इत्येवमूचुर्बहवो विशिष्टा रक्षोगणास्तत्र समेत्य सर्वे ॥ सप्राणिसंघां सगृहां सवृक्षां दग्धां पुरीं तां सहसा समीक्ष्य ॥ ३९ ॥ ततस्तु लंका सहसा प्रदग्धा सराक्षसा साश्वरथा सनागा ॥ सपक्षिसंघा समृगा सवृक्षा रुरोद दीना तुमुलं सशब्दम् ॥४०॥ हा तात हा पुत्रक कांत मित्र हा जीवितेशांग हतं सुपुण्यम् ॥ रक्षोभिरेवं बहुधा ब्रुवद्भिः शब्दः कृतो घोरतरः सुभीतः ॥ ४१ ॥ हुताशनज्वालसमावृता सा हतप्रवीरा परिवृत्तयोधा ॥ हनूमतः क्रोधबलाभिभूता बभूव शापोपहतेव लंका ॥ ४२ ॥ ससंभ्रमं त्रस्तविषण्णरक्षसां समुज्वलज्वालहुताशनांकिताम् ॥ ददर्श लंकां हनुमान्महामनाः स्वयंभुरोषोपहतामिवावनिम् ॥ ४३ ॥ भंक्त्वा वनं पादपरत्नसंकुलं हत्वा च रक्षांसि महांति

संयुगे ॥ दग्ध्वा पुरीं तां गृहरत्नमालिनीं तस्थौ हनूमान्पवनात्मजः कपिः ॥ ४४ ॥ त्रिकूटशृंगाग्रतले विचित्रे प्रतिष्ठितो वानरराजसिंहः ॥ प्रदीप्तलांगूल· कृतार्चिमाली व्यराजतादित्य इवांशुमाली ॥४५॥ सराक्षसांस्तान्सुबहूंश्च हत्वा वनं च भंक्त्वा बहुपादपं तत् ॥ विसृज्य रक्षोभवनेषु चाग्निं जगाम रामं मनसा महात्मा ॥ ४६ ॥ ततस्तु तं वानरवीरमुख्यं महाबलं मारुततुल्यवेगम् ॥ महामतिं वायुसुतं वरिष्ठं प्रतुष्टुवुर्देवगणाश्च सर्वे ॥४७॥ भंक्त्वा वनं महातेजा हत्वा रक्षांसि संयुगे ॥ दग्ध्वा लंकापुरीं भीमां रराज स महाकपिः ॥ ४८ ॥ गृहाग्र्यशृंगाग्रतले विचित्रे प्रतिष्ठितो वानरराजसिंहः ॥ प्रदीप्तलांगूलकृतार्चि- माली व्यराजतादित्य इवार्चिमाली ॥ ४९ ॥ लंकां समस्तां संपीड्य लांगूलाग्निं महाकपिः ॥ निर्वापयामास तदा समुद्रे हरिपुंगवः ॥ ५० ॥ ततो देवाः सगं- धर्वाः सिद्धाश्च परमर्षयः ॥ दृष्ट्वा लंकां प्रदग्धां तां विस्मयं परमं गताः ॥ ५१ ॥ तं दृष्ट्वा वानरश्रेष्ठं हनूमंतं महाकपिम् ॥ कालाग्निरिति संचिंत्य सर्वभूतानि

तत्रस्तुः ॥ ५२ ॥ देवाश्च सर्वे मुनिपुंगवाश्च गंधर्वविद्याधरनागयक्षाः ॥ भूतानि सर्वाणि महांति तत्र जग्मुः परां प्रीतिमतुल्यरूपाम् ॥ ५३ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुंदरकांडे चतुःपंचाशः सर्गः ॥ ५४ ॥

---

## पंचपंचाशः सर्गः ५५

संदीप्यमानां विध्वस्तां त्रस्तरक्षोगणां पुरीम् ॥ अवेक्ष्य हनुमान् लंकां चिंतयामास वानरः ॥१॥ तस्याभूत्सुमहांस्त्रासः कुत्सा चात्मन्यजायत ॥ लंकां प्रदहता कर्म किंस्वित्कृतमिदं मया ॥ २ ॥ धन्याः खलु महात्मानो ये बुद्ध्या कोपमुत्थितम् ॥ निरुंधंति महात्मानो दीप्तमग्निमिवांभसा ॥ ३ ॥ क्रुद्धः पापं न कुर्यात्कः क्रुद्धो हन्याद्गुरूनपि ॥ क्रुद्धः परुषया वाचा नरः साधूनधिक्षिपेत् ॥ ४ ॥ वाच्यावाच्यं प्रकुपितो न विजानाति कर्हिचित् ॥ नाकार्यमस्ति क्रुद्धस्य नावाच्यं विद्यते क्वचित् ॥५॥ यः समुत्पतितं क्रोधं क्षमयैव निरस्यति ॥ यथो-

रगस्त्वचं जीर्णां स वै पुरुष उच्यते ॥ ६ ॥ धिगस्तु मां सुदुर्बुद्धिं निर्लज्जं पापकृत्तमम् ॥ अचिंतयित्वा तां सीतामग्निदं स्वामिघातकम् ॥७॥ यदि दग्धा त्वियं सर्वा नूनमार्यापि जानकी ॥ दग्धा तेन मया भर्तुर्हतं कार्यमजानता ॥ ८ ॥ यदर्थमयमारंभस्तत्कार्यमवसादितम् ॥ मया हि दहता लंकां न सीता परिरक्षिता ॥ ९ ॥ ईषत्कार्यमिदं कार्यं कृतमासीन्न संशयः ॥ तस्य क्रोधाभिभूतेन मया मूलक्षयः कृतः ॥१०॥ विनष्टा जानकी व्यक्तं न ह्यदग्धः प्रदृश्यते ॥ लंकायाः कश्चिदुद्देशः सर्वा भस्मीकृता पुरी ॥ ११ ॥ यदि तद्विहतं कार्यं मया प्रज्ञाविपर्ययात् ॥ इहैव प्राणसंन्यासो ममापि ह्यद्य रोचते ॥ १२ ॥ किमग्नौ निपताम्यद्य आहोस्विद्वडवामुखे ॥ शरीरमिह सत्त्वानां दद्मि सागरवासिनाम् ॥ १३ ॥ कथं नु जीवता शक्यो मया द्रष्टुं हरीश्वरः ॥ तौ वा पुरुषशार्दूलौ कार्यसर्वस्वघातिना ॥ १४ ॥ मया खलु तदेवेदं रोषदोषात्प्रदर्शितम् ॥ प्रथितं त्रिषु लोकेषु कपित्वमनवस्थितम् ॥ १५ ॥ धिगस्तु राजसं भावमनीशमनव-

स्थितम् ॥ ईश्वरेणापि यद्रागान्मया सीता न रक्षिता ॥ १६ ॥ विनष्टायां तु सीतायां तावुभौ विनशिष्यतः ॥ तयोर्विनाशे सुग्रीवः सबंधुर्विनशिष्यति ॥ १७ ॥ एतदेव वचः श्रुत्वा भरतो भ्रातृवत्सलः ॥ धर्मात्मा सहशत्रुघ्नः कथं शक्ष्यति जीवितुम् ॥ १८ ॥ इक्ष्वाकुवंशे धर्मिष्ठे गते नाशमसंशयम् ॥ भविष्यंति प्रजाः सर्वाः शोकसंतापपीडिताः ॥ १९ ॥ तदहं भाग्यरहितो लुप्तधर्मार्थसंग्रहः ॥ रोषदोषपरीतात्मा व्यक्तं लोकविनाशनः ॥२०॥ इति चिंतयतस्तस्य निमित्तान्युपपेदिरे ॥ पूर्वमप्युपलब्धानि साक्षात्पुनरचिंतयत् ॥ २१ ॥ अथवा चारुसर्वांगी रक्षिता स्वेन तेजसा ॥ न नशिष्यति कल्याणी नाग्निरग्नौ प्रवर्तते ॥ २२ ॥ नहि धर्मात्मनस्तस्य भार्याममिततेजसः ॥ स्वचरित्राभिगुप्तां तां स्प्रष्टुमर्हति पावकः ॥ २३ ॥ नूनं रामप्रभावेण वैदेह्याः सुकृतेन च ॥ यन्मां दहनकर्मायं नादहद्धव्यवाहनः ॥ २४ ॥ त्रयाणां भरतादीनां भ्रातॄणां देवता च या ॥ रामस्य च मनःकांता सा कथं विनशिष्यति ॥ २५ ॥ यद्वा दहनकर्मायं सर्वत्र

प्रभुरव्ययः ॥ न मे दहति लांगूलं कथमार्यां प्रधक्ष्यति ॥ २६ ॥ पुनश्चाचिंतयत्तत्र हनूमान्विस्मितस्तदा ॥ हिरण्यनाभस्य गिरेर्जलमध्ये प्रदर्शनम् ॥ २७ ॥ तपसा सत्यवाक्येन अनन्यत्वाच्च भर्तरि ॥ असौ विनिर्दहेदग्निं न तामग्निः प्रधक्ष्यति ॥ २८ ॥ स तथा चिंतयंस्तत्र देव्या धर्मपरिग्रहम् ॥ शुश्राव हनुमान्वाक्यं चारणानां महात्मनाम् ॥ २९ ॥ अहो खलु कृतं कर्म दुर्विगाहं हनूमता ॥ अग्निं विसृजता तीक्ष्णं भीमं राक्षससद्मनि ॥ ३० ॥ प्रपलायितरक्षःस्त्रीबालवृद्धसमाकुला ॥ जनकोलाहलाध्माता क्रंदंतीवाद्रिकंदरे ॥ ३१ ॥ दग्धेयं नगरी लंका साट्टप्राकारतोरणा ॥ जानकी न च दग्धेति विस्मयोऽद्भुत एव नः ॥ ३२ ॥ इति शुश्राव हनुमान्वाचं तामभृतोपमाम् ॥ बभूव चास्य मनसो हर्षस्तत्कालसंभवः ॥ ३३ ॥ स निमित्तैश्च दृष्टार्थैः कारणैश्च महागुणैः ॥ ऋषिवाक्यैश्च हनुमानभवत्प्रीतमानसः ॥ ३४ ॥ ततः कपिः प्राप्तमनोरथार्थस्तामक्षतां राजसुतां विदित्वा ॥ प्रत्यक्षतस्तां पुनरेव दृष्ट्वा प्रतिप्रयाणाय

मतिं चकार ॥ ३५ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुंदरकांडे पंचपंचाशः सर्गः ॥ ५५ ॥

---

## षट्पंचाशः सर्गः ५६

ततस्तु शिंशपामूले जानकीं पर्यवस्थिताम् ॥ अभिवाद्याब्रवीद्दिष्ट्या पश्यामि त्वामिहाक्षताम् ॥ १ ॥ ततस्तं प्रस्थितं सीता वीक्षमाणा पुनः पुनः ॥ भर्तुः स्नेहान्विता वाक्यं हनूमंतमभाषत ॥ २ ॥ यदि त्वं मन्यसे तात वसैकाहमिहानघ ॥ कचित्सुसंवृते देशे विश्रांतः श्वो गमिष्यसि ॥ ३ ॥ मम चैवाल्पभाग्यायाः सांनिध्यात्तव वानर ॥ शोकस्यास्याप्रमेयस्य मुहूर्तं स्यादपि क्षयः ॥ ४ ॥ गते हि हरिशार्दूल पुनः संप्राप्तये त्वयि ॥ प्राणेष्वपि न विश्वासो मम वानरपुंगव ॥ ५ ॥ अदर्शनं च ते वीर भूयो मां दारयिष्यति ॥ दुःखाद्दुःखतरं

प्राप्तां दुर्मनःशोककर्शिताम् ॥ ६ ॥ अयं च वीर संदेहस्तिष्ठतीव ममाग्रतः ॥ सुमहत्सु सहायेषु हर्यृक्षेषु महाबलः ॥ ७ ॥ कथं नु खलु दुष्पारं संतरिष्यंति सागरम् ॥ तानि हर्यृक्षसैन्यानि तौ वा नरवरात्मजौ ॥ ८ ॥ त्रयाणामेव भूतानां सागरस्यातिलंघने ॥ शक्तिः स्याद्वैनतेयस्य तव वा मारुतस्य वा ॥ ९ ॥ तदत्र कार्यनिर्बंधे समुत्पन्ने दुरासदे ॥ किं पश्यसि समाधानं त्वं हि कार्यविशारदः ॥ १० ॥ काममस्य त्वमेवैकः कार्यस्य परिसाधने ॥ पर्याप्तः परवीरघ्न यशस्यस्ते बलोदयः ॥ ११ ॥ बलैस्तु संकुलां कृत्वा लंकां परबलार्दनः ॥ मां नयेद्यदि काकुत्स्थस्तत्तस्य सदृशं भवेत् ॥ १२ ॥ तद्यथा तस्य विक्रांतमनुरूपं महात्मनः ॥ भवत्याहवशूरस्य तथा त्वमुपपादय ॥ १३ ॥ तदर्थोपहितं वाक्यं प्रश्रितं हेतुसंहितम् ॥ निशम्य हनुमांस्तस्या वाक्यमुत्तरमब्रवीत् ॥ १४ ॥ देवि हर्यृक्षसैन्यानामीश्वरः प्लवतां वरः ॥ सुग्रीवः सत्त्वसंपन्नस्तवार्थे कृतनिश्चयः ॥ १५ ॥ स वानरसहस्राणां कोटीभिरभिसंवृतः ॥

क्षिप्रमेष्यति वैदेहि सुग्रीवः प्लवगाधिपः ॥ १६ ॥ तौ च वीरौ नरवरौ सहितौ रामलक्ष्मणौ ॥ आगम्य नगरीं लंकां सायकैर्विधमिष्यतः ॥ १७ ॥ सगणं राक्षसं हत्वा न चिराद्रघुनंदनः ॥ त्वामादाय वरारोहे स्वां पुरीं प्रतियास्यति ॥ १८ ॥ समाश्वसिहि भद्रं ते भव त्वं कालकांक्षिणी ॥ क्षिप्रं द्रक्ष्यसि रामेण निहतं रावणं रणे ॥ १९ ॥ निहते राक्षसेंद्रे च सपुत्रामात्यबांधवे ॥ त्वं समेष्यसि रामेण शशांकेनेव रोहिणी ॥ २० ॥ क्षिप्रमेष्यति काकुत्स्थो हर्यृक्षप्रवरैर्युतः ॥ यस्ते युधि विनिर्जित्य शोकं व्यपनयिष्यति ॥ २१ ॥ एवमाश्वास्य वैदेहीं हनूमान्मारुतात्मजः ॥ गमनाय मतिं कृत्वा वैदेहीमभ्यवादयत् ॥ २२ ॥ राक्षसान्प्रवरान्हत्वा नाम विश्राव्य चात्मनः ॥ समाश्वास्य च वैदेहीं दर्शयित्वा परं बलम् ॥ २३ ॥ नगरीमाकुलां कृत्वा वंचयित्वा च रावणम् ॥ दर्शयित्वा बलं घोरं वैदेहीमभिवाद्य च ॥ प्रतिगंतुं मनश्चक्रे पुनर्मध्येन सागरम् ॥ २४ ॥ ततः स कपिशार्दूलः स्वामिसंदर्शनोत्सुकः ॥ आरुरोह गिरिश्रेष्ठ-

मरिघ्नमरिमर्दनः ॥ २५ ॥ तुंगपद्मकजुष्टाभिर्नीलाभिर्वनराजिभिः ॥ सोत्तरीय-मिवांभोदैः शृंगांतरविलंबिभिः ॥ २६ ॥ बोध्यमानमिव प्रीत्या दिवाकरकरैः शुभैः ॥ उन्मिषंतमिवोद्धूतैर्लोचनैरिव धातुभिः ॥ २७ ॥ तोयौघनिःस्वनैर्मंद्रैः प्राधीतमिव सर्वतः ॥ प्रगीतमिव विस्पष्टं नानाप्रस्रवणस्वनैः ॥ २८ ॥ देव-दारुभिरुद्धूतैरूर्ध्वबाहुमिव स्थितम् ॥ प्रपातजलनिर्घोषैः प्राकुष्टमिव सर्वतः ॥ २९ ॥ वेपमानमिव श्यामैः कंपमानैः शरद्वनैः ॥ वेणुभिर्मारुतोद्धूतैः कूजंत-मिव कीचकैः ॥ ३० ॥ निःश्वसंतमिवामर्षाद्धोरैराशीविषोत्तमैः ॥ नीहारकृत-गंभीरैर्ध्यायंतमिव गह्वरैः ॥ ३१ ॥ मेघपादनिभैः पादैः प्रक्रांतमिव सर्वतः ॥ जृंभमाणमिवाकाशे शिखरैरभ्रमालिभिः ॥ ३२ ॥ कूटैश्च बहुधाकीर्णं शोभितं बहुकंदरैः ॥ सालतालैश्च कर्णैश्च वंशैश्च बहुभिर्वृतम् ॥ ३३ ॥ लतावितानै-र्विततैः पुष्पवद्भिरलंकृतम् ॥ नानामृगगणैः कीर्णं धातुनिष्पन्दभूषितम् ॥ ३४ ॥ बहुप्रस्रवणोपेतं शिलासंचयसंकटम् ॥ महर्षियक्षगंधर्वकिंनरोरगसेवितम्

॥ ३५ ॥ लतापादपसंबाधं सिंहाधिष्ठितकंदरम् ॥ व्याघ्रादिभिः समाकीर्णं स्वादुमूलफलद्रुमम् ॥ ३६ ॥ आरुरोहानिलसुतः पर्वतं प्लवगोत्तमः ॥ रामदर्शनशीघ्रेण प्रहर्षेणाभिचोदितः ॥ ३७ ॥ तेन पादतलक्रांता रम्येषु गिरिसानुषु ॥ सघोषाः समशीर्यंत शिलाश्चूर्णीकृतास्ततः ॥ ३८ ॥ स तमारुह्य शैलेंद्रं व्यवर्धत महाकपिः ॥ दक्षिणादुत्तरं पारं प्रार्थयँल्लवणांभसः ॥ ३९ ॥ अधिरुह्य ततो वीरः पर्वतं पवनात्मजः ॥ ददर्श सागरं भीमं भीमोरगनिषेवितम् ॥ ४० ॥ स मारुत इवाकाशं मारुतस्यात्मसंभवः ॥ प्रपेदे हरिशार्दूलो दक्षिणादुत्तरां दिशम् ॥ ४१ ॥ स तदा पीडितस्तेन कपिना पर्वतोत्तमः ॥ ररास विविधैर्भूतैः प्राविशद्वसुधातलम् ॥ कंपमानैश्च शिखरैः पतद्भिरपि च द्रुमैः ॥ ४२ ॥ तस्योरुवेगोन्मथिताः पादपाः पुष्पशालिनः ॥ निपेतुर्भूतले भग्नाः शक्रायुधहता इव ॥ ४३ ॥ कंदरोदरसंस्थानां पीडितानां महौजसाम् ॥ सिंहानां निनदो भीमो नभो भिंदन्हि शुश्रुवे ॥ ४४ ॥ त्रस्तव्याविद्धवसना

व्याकुलीकृतभूषणाः ॥ विद्याधर्यः समुत्पेतुः सहसा धरणीधरात् ॥ ४५ ॥ कृतिप्रमाणा बलिनो दीप्तजिह्वा महाविषाः ॥ निपीडितशिरोग्रीवा व्यवेष्टंत महाहयः ॥ ४६ ॥ किंनरोरगगंधर्वयक्षविद्याधरास्तथा ॥ पीडितं तं नगवरं त्यक्त्वा गगनमास्थिताः ॥ ४७ ॥ स च भूमिधरः श्रीमान् बलिना तेन पीडितः ॥ सवृक्षशिखरोदग्रः प्रविवेश रसातलम् ॥ ४८ ॥ दशयोजनविस्तारस्त्रिंशद्योजनमुच्छ्रितः ॥ धरण्या समतां यातः स बभूव धराधरः ॥ ४९ ॥ स लिलंघयिषुर्भीमं सलीलं लवणार्णवम् ॥ कल्लोलास्फालवेलांतमुत्पपात नभो हरिः ॥ ५० ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुंदरकांडे षट्पंचाशः सर्गः ॥ ५६ ॥

---

## सप्तपंचाशः सर्गः ५७

आप्लुत्य च महावेगः पक्षवानिव पर्वतः ॥ भुजंगयक्षगंधर्वप्रबुद्धकमलोत्पलम्

॥१॥ सचंद्रकुमुदं रम्यं सार्ककारंडवं शुभम् ॥ तिष्यश्रवणकादंबमभ्रशैवलशाद्वलम् ॥२॥ पुनर्वसुमहामीनं लोहितांगमहाग्रहम् ॥ ऐरावतमहाद्वीपं स्वातीहंसविलोलितम् ॥ ३ ॥ वातसंघातजालोर्मिचंद्रांशुशिशिरांबुमत् ॥ हनूमान्मारुतगतिर्महानौरिव सागरम् ॥४॥ ग्रसमान इवाकाशं ताराधिपमिवोल्लिखन् ॥ हरन्निव सनक्षत्रं गगनं सार्कमंडलम् ॥५॥ अपारमपरिश्रांतश्चांबुधिं समगाहत ॥ हनूमान्मेघजालानि विकर्षन्निव गच्छति ॥६॥ पाण्डुरारुणवर्णानि नीलमांजिष्ठकानि च ॥ हरितारुणवर्णानि महाभ्राणि चकाशिरे ॥ ७॥ प्रविशन्नभ्रजालानि निष्क्रमंश्च पुनः पुनः ॥ प्रकाशश्चाप्रकाशश्च चंद्रमा इव दृश्यते ॥८॥ विविधाभ्रघनापन्नगोचरो धवलांबरः ॥ दृश्यादृश्यतनुर्वीरस्तथा चंद्रायतेऽम्बरे ॥ ९ ॥ तार्क्ष्यायमाणो गगने स बभौ वायुनंदनः ॥ दारयन्मेघवृंदानि निष्पतंश्च पुनः पुनः ॥ १० ॥ नदन्नादेन महता मेघस्वनमहास्वनः ॥ प्रवरान्राक्षसान्हत्वा नाम विश्राव्य चात्मनः ॥११॥ आकुलां नगरीं कृत्वा व्यथयित्वा च रावणम् ॥ अर्द-

यित्वा महावीरान्वैदेहीमभिवाद्य च ॥ आजगाम महातेजाः पुनर्मध्येन सागरम् ॥ १२ ॥ पर्वतेंद्रं सुनाभं च समुपस्पृश्य वीर्यवान् ॥ ज्यामुक्त इव नाराचो महावेगोऽभ्युपागमत् ॥१३॥ स किंचिदारात्संप्राप्तः समालोक्य महागिरिम् ॥ महेंद्रमेघसंकाशो ननाद स महाकपिः ॥ १४ ॥ स पूरयामास कपिर्दिशो दश समंततः ॥ नदन्नादेन महता मेघस्वनमहास्वनः ॥ १५ ॥ स तं देशमनुप्राप्तः सुहृद्दर्शनलालसः ॥ ननाद सुमहानादं लांगूलं चाप्यकंपयत् ॥ १६ ॥ तस्य नानद्यमानस्य सुपर्णचरिते पथि ॥ फलतीवास्य घोषेण गगनं सार्कमंडलम् ॥ १७ ॥ ये तु तत्रोत्तरे कूले समुद्रस्य महाबलाः ॥ पूर्वं संविष्ठिताः शूरा वायुपुत्रदिदृक्षवः ॥ १८ ॥ महतो वायुनुन्नस्य तोयदस्येव निःस्वनम् ॥ शुश्रुवुस्ते तदा घोषमूरुवेगं हनूमतः ॥ १९ ॥ ते दीनमनसः सर्वे शुश्रुवुः काननौकसः ॥ वानरेंद्रस्य निर्घोषं पर्जन्यनिनदोपमम् ॥ २० ॥ निशम्य नदतो नादं वानरास्ते समंततः ॥ बभूवुरुत्सुकाः सर्वे सुहृद्दर्शनकांक्षिणः ॥२१॥ जांबवान्स हरिश्रेष्ठः

प्रीतिसंहृष्टमानसः ॥ उपामंत्र्य हरीन्सर्वानिदं वचनमब्रवीत् ॥ २२ ॥ सर्वथा कृतकार्योऽसौ हनुमान्नात्र संशयः ॥ न ह्यस्याकृतकार्यस्य नाद एवंविधो भवेत् ॥ २३ ॥ तस्य बाहूरुवेगं च निनादं च महात्मनः ॥ निशम्य हरयो हृष्टा समुत्पेतुर्यतस्ततः ॥ २४ ॥ ते नगाग्रान्नगाग्राणि शिखराच्छिखराणि च ॥ प्रहृष्टाः समपद्यंत हनूमंतं दिदृक्षवः ॥ २५ ॥ ते प्रीताः पादपाग्रेषु गृह्य शाखामवस्थिताः ॥ वासांसि च प्रकाशानि समाविध्यन्त वानराः ॥ २६ ॥ गिरिगह्वरसंलीनो यथा गर्जति मारुतः ॥ एवं जगर्ज बलवान्हनूमान्मारुतात्मजः ॥ २७ ॥ तमभ्रघनसंकाशमापतंतं महाकपिम् ॥ दृष्ट्वा ते वानराः सर्वे तस्थुः प्रांजलयस्तदा ॥ २८ ॥ ततस्तु वेगवान्वीरो गिरेर्गिरिनिभः कपिः ॥ निपपात गिरेस्तस्य शिखरे पादपाकुले ॥ २९ ॥ हर्षेणापूर्यमाणोऽसौ रम्ये पर्वतनिर्झरे ॥ छिन्नपक्ष इवाकाशात्पपात धरणीधरः ॥ ३० ॥ ततस्ते प्रीतमनसः सर्वे वानरपुंगवाः ॥ हनूमंतं महात्मानं परिवार्योपतस्थिरे ॥ ३१ ॥ परिवार्य च ते सर्वे

परां प्रीतिमुपागताः ॥ प्रहृष्टवदनाः सर्वे तमागतमुपागमन् ॥ ३२ ॥ उपायनानि चादाय मूलानि च फलानि च ॥ प्रत्यर्चयन्हरिश्रेष्ठं हरयो मारुतात्मजम् ॥ ३३॥ विनेदुर्मुदिताः केचित्केचित्किलकिलां तथा ॥ हृष्टाः पादपशाखाश्च आनिन्युर्वानरर्षभाः ॥ ३४ ॥ हनूमांस्तु गुरून्वृद्धाञ्जांबवत्प्रमुखांस्तदा ॥ कुमारमंगदं चैव सोऽवंदत महाकपिः ॥ ३५ ॥ स ताभ्यां पूजितः पूज्यः कपिभिश्च प्रसादितः ॥ दृष्टा देवीति विक्रांतः संक्षेपेण न्यवेदयत् ॥ ३६ ॥ निषसाद च हस्तेन गृहीत्वा वालिनः सुतम् ॥ रमणीये वनोद्देशे महेंद्रस्य गिरेस्तदा ॥ हनूमानब्रवीत्पृष्टस्तदा तान्वानरर्षभान् ॥ ३७ ॥ अशोकवनिकासंस्था दृष्टा सा जनकात्मजा ॥ रक्ष्यमाणा सुघोराभी राक्षसीभिरनिंदिता ॥ ३८ ॥ एकवेणीधरा बाला रामदर्शनलालसा ॥ उपवासपरिश्रांता मलिना जटिला कृशा ॥ ३९ ॥ ततो दृष्टेति वचनं महार्थममृतोपमम् ॥ निशम्य मारुतेः सर्वे मुदिता वानराभवन् ॥ ४० ॥ क्ष्वेडंत्यन्ये नदन्त्यन्ये गर्जंत्यन्ये महाबलाः ॥

चक्रुः किलकिलामन्ये प्रतिगर्जंति चापरे ॥४१॥ केचिदुच्छ्रितलांगूलाः प्रहृष्टाः कपिकुंजराः ॥ आयतांचितदीर्घाणि लांगूलानि प्रविव्यधुः ॥ ४२ ॥ अपरे तु हनूमंतं श्रीमंतं वानरोत्तमम् ॥ आप्लुत्य गिरिशृंगेषु संस्पृशंति स्म हर्षिताः ॥ ४३ ॥ उक्तवाक्यं हनूमंतमंगदस्तु तदाब्रवीत् ॥ सर्वेषां हरिवीराणां मध्ये वाचमनुत्तमाम् ॥४४॥ सत्त्वे वीर्ये न ते कश्चित्समो वानर विद्यते ॥ यदवप्लुत्य विस्तीर्णं सागरं पुनरागतः ॥४५॥ जीवितस्य प्रदाता नस्त्वमेको वानरोत्तम ॥ त्वत्प्रसादात्समेष्यामः सिद्धार्था राघवेण ह ॥ ४६ ॥ अहो स्वामिनि ते भक्तिरहो वीर्यमहो धृतिः ॥ दिष्ट्या दृष्टा त्वया देवी रामपत्नी यशस्विनी ॥ दिष्ट्या त्यक्ष्यति काकुत्स्थः शोकं सीतावियोगजम् ॥ ४७ ॥ ततोऽगदं हनूमंतं जांबवंतं च वानराः ॥ परिवार्य प्रमुदिता भेजिरे विपुलाः शिलाः ॥ ४८ ॥ उपविश्य गिरेस्तस्य शिलासु विपुलासु ते ॥ श्रोतुकामाः समुद्रस्य लंघनं वानरोत्तमाः ॥ ४९ ॥ दर्शनं चापि लंकायाः सीताया रावणस्य च ॥ तस्थुः प्रांज-

लयः सर्वे हनूमद्वदनोन्मुखाः ॥५०॥ तस्थौ तत्रांगदः श्रीमान्वानरैर्बहुभिर्वृतः ॥ उपास्यमानो विविधैर्दिवि देवपतिर्यथा ॥ ५१ ॥ हनूमता कीर्तिमता यशस्विना तथांगदेनांगदनद्धबाहुना ॥ मुदा तदाध्यासितमुन्नतं महन्महीधराग्रं ज्वलितं श्रियाभवत् ॥ ५२ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुंदरकांडे सप्तपंचाशः सर्गः ॥ ५७ ॥

---

## अष्टपंचाशः सर्गः ५८

ततस्तस्य गिरेः शृंगे महेंद्रस्य महाबलाः ॥ हनूमत्प्रमुखाः प्रीतिं हरयो जग्मुरुत्तमाम् ॥१॥ प्रीतिमत्सूपविष्टेषु वानरेषु महात्मसु ॥ तं ततः प्रतिसंहृष्टः प्रीतियुक्तं महाकपिम् ॥ जांबवान्कार्यवृत्तांतमपृच्छदनिलात्मजम् ॥ २ ॥ कथं दृष्टा त्वया देवी कथं वा तत्र वर्तते ॥ तस्यां चापि कथं वृत्तः क्रूरकर्मा दशाननः ॥ ३ ॥ तत्त्वतः सर्वमेतन्नः प्रब्रूहि त्वं महाकपे ॥ ४ ॥ संमार्गिता कथं

देवी किं च सा प्रत्यभाषत ॥ श्रुतार्थाश्चिंतयिष्यामो भूयः कार्यविनिश्चयम् ॥ ५ ॥ यश्चार्थस्तत्र वक्तव्यो गतैरस्माभिरात्मवान् ॥ रक्षितव्यं च यत्तत्र तद्भवान्व्याकरोतु नः ॥ ६ ॥ स नियुक्तस्ततस्तेन संप्रहृष्टतनूरुहः ॥ प्रणम्य शिरसा देव्यै सीतायै प्रत्यभाषत ॥ ७ ॥ प्रत्यक्षमेव भवतां महेंद्राग्रात्खमाप्लुतः ॥ उदधेर्दक्षिणं पारं कांक्षमाणः समाहितः ॥ ८ ॥ गच्छतश्च हि मे घोरं विघ्नरूपमिवाभवत् ॥ कांचनं शिखरं दिव्यं पश्यामि सुमनोहरम् ॥ ९ ॥ स्थितं पंथानमावृत्य मेने विघ्नं च तं नगम् ॥ १० ॥ उपसंगम्य तं दिव्यं कांचनं नगमुत्तमम् ॥ कृता मे मनसा बुद्धिर्भेत्तव्योऽयं मयेति च ॥ ११ ॥ प्रहतस्य मया तस्य लांगूलेन महागिरेः ॥ शिखरं सूर्यसंकाशं व्यशीर्यत सहस्रधा ॥ १२ ॥ व्यवसायं च तं बुद्ध्वा सहोवाच महागिरिः ॥ पुत्रेति मधुरां वाणीं मनः प्रह्लादयन्निव ॥ १३ ॥ पितृव्यं चापि मां विद्धि सखायं मातरिश्वनः ॥ मैनाकमिति विख्यातं निवसंतं महोदधौ ॥ १४ ॥ पक्षवंतः पुरा पुत्र बभूवुः पर्वतोत्तमाः ॥

छंदतः पृथिवीं चेरुर्बाधमानाः समंततः ॥ १५ ॥ श्रुत्वा नगानां चरितं महेंद्रः पाकशासनः ॥ वज्रेण भगवान्पक्षौ चिच्छेदैषां सहस्रशः ॥ १६ ॥ अहं तु मोचितस्तस्माच्च पित्रा महात्मना ॥ मारुतेन तदा वत्स प्रक्षिप्तो वरुणालये ॥ १७ ॥ राघवस्य मया साह्ये वर्तितव्यमरिंदम ॥ रामो धर्मभृतां श्रेष्ठो महेंद्रसमविक्रमः ॥ १८ ॥ एतच्छ्रुत्वा मया तस्य मैनाकस्य महात्मनः ॥ कार्यमावेद्य च गिरेरुद्धतं वै मनो मम ॥ १९ ॥ तेन चाहमनुज्ञातो मैनाकेन महात्मना ॥ स चाप्यंतर्हितः शैलो मानुषेण वपुष्मता ॥ शरीरेण महाशैलः शैलेन च महोदधौ ॥ २० ॥ उत्तमं जवमास्थाय शेषमध्वानमास्थितः ॥ ततोऽहं सुचिरं कालं जवेनाभ्यगमं पथि ॥ २१ ॥ ततः पश्याम्यहं देवीं सुरसां नागमातरम् ॥ समुद्रमध्ये सा देवी वचनं चेदमब्रवीत् ॥ २२ ॥ मम भक्ष्यः प्रदिष्टस्त्वममरैर्हरिसत्तम ॥ अतस्त्वां भक्षयिष्यामि विहितस्त्वं हि मे सुरैः ॥ २३ ॥ एवमुक्तः सुरसया प्राञ्जलिः प्रणतः स्थितः ॥ विवर्णवदनो भूत्वा वाक्यं चेदमुदीरयम्

॥ २४ ॥ रामो दाशरथिः श्रीमान् प्रविष्टो दंडकावनम् ॥ लक्ष्मणेन सह भ्रात्रा सीतया च परंतपः ॥ २५ ॥ तस्य सीता हृता भार्या रावणेन दुरात्मना ॥ तस्याः सकाशं दूतोऽहं गमिष्ये रामशासनात् ॥ कर्तुमर्हसि रामस्य साहाय्यं विषये सति ॥ २६ ॥ अथवा मैथिलीं दृष्ट्वा रामं चाक्लिष्टकारिणम् ॥ आगमिष्यामि ते वक्त्रं सत्यं प्रतिश्रृणोमि ते ॥ २७ ॥ एवमुक्ता मया सा तु सुरसा कामरूपिणी ॥ अब्रवीन्नातिवर्तेत कश्चिदेष वरो मम ॥ २८ ॥ एवमुक्तः सुरसया दशयोजनमायतः ॥ ततोऽर्धगुणविस्तारो बभूवाहं क्षणेन तु ॥ २९ ॥ मत्प्रमाणाधिकं चैव व्यादितं तु मुखं तया ॥ तद्दृष्ट्वा व्यादितं त्वास्यं ह्रस्वं ह्यकरवं पुनः ॥ ३० ॥ तस्मिन्मुहूर्ते च पुनर्बभूवांगुष्ठसंमितः ॥ अभिपत्याशु तद्वक्त्रं निर्गतोऽहं ततः क्षणात् ॥ ३१ ॥ अब्रवीत्सुरसा देवी स्वेन रूपेण मां पुनः ॥ अर्थसिद्ध्यै हरिश्रेष्ठ गच्छ सौम्य यथासुखम् ॥ ३२ ॥ समानय च वैदेहीं राघवेण महात्मना ॥ सुखी भव महाबाहो प्रीतास्मि तव वानर ॥ ३३ ॥ ततोऽहं

साधु साध्वीति सर्वभूतैः प्रशंसितः ॥ ततोऽन्तरिक्षं विपुलं प्लुतोऽहं गरुडो यथा ॥ ३४ ॥ छाया मे निगृहीता च न च पश्यामि किंचन ॥ ३५ ॥ सोऽहं विगतवेगस्तु दिशो दश विलोकयन् ॥ न किंचित्तत्र पश्यामि येन मे विहता गतिः ॥ ३६॥ अथ मे बुद्धिरुत्पन्ना किं नाम गगने मम ॥ ईदृशो विघ्न उत्पन्नो रूपं यत्र न दृश्यते ॥३७॥ अधोभागे तु मे दृष्टिः शोचता पातिता मया ॥ ततोऽद्राक्षमहं भीमां राक्षसीं सलिलेशयाम् ॥ ३८ ॥ प्रहस्य च महानादमुक्तोऽहं भीमया तया ॥ अवस्थितमसंभ्रांतमिदं वाक्यमशोभनम् ॥ ३९ ॥ कासि गंता महाकाय क्षुधिताया ममेप्सितः ॥ भक्षः प्रीणय मे देहं चिरमाहारवर्जितम् ॥ ४० ॥ बाढमित्येव तां वाणीं प्रत्यगृह्णामहं ततः ॥ आस्यप्रमाणादधिकं तस्याः कायमपूरयम् ॥ ४१ ॥ तस्याश्चास्यं महद्भीमं वर्धते मम भक्षणे ॥ न च मां सा नु बुबुधे मम वा विकृतं कृतम् ॥ ४२ ॥ ततोऽहं विपुलं रूपं संक्षिप्य निमिषांतरात् ॥ तस्या हृदयमादाय प्रपतामि नभःस्थलम् ॥ ४३ ॥ सा विसृष्टभुजा

भीमा पपात लवणांभसि ॥ मया पर्वतसंकाशा निकृत्तहृदया सती ॥ ४४ ॥ शृणोमि खगतानां च वाचः सौम्या महात्मनाम् ॥ राक्षसी सिंहिका भीमा क्षिप्रं हनुमता हता ॥ ४५ ॥ तां हत्वा पुनरेवाहं कृत्यमात्ययिकं स्मरन् ॥ गत्वा च महदध्वानं पश्यामि नगमंडितम् ॥ ४६ ॥ दक्षिणं तीरमुदधेर्लंका यत्र गता पुरी ॥ अस्तं दिनकरे याते रक्षसां निलयं प्रति ॥ प्रविष्टोऽहमविज्ञातो रक्षोभिर्भीमविक्रमैः ॥ ४७ ॥ तत्र प्रविशतश्चापि कल्पांतघनसप्रभा ॥ अट्टहासं विमुंचंती नारी काप्युत्थिता पुरः ॥ ४८ ॥ जिघांसंतीं ततस्तां तु ज्वलदग्निशिरोरुहाम् ॥ सव्यमुष्टिप्रहारेण पराजित्य सुभैरवाम् ॥ प्रदोषकाले प्रविशं भीतयाहं तयोदितः ॥ ४९ ॥ अहं लंकापुरी वीर निर्जिता विक्रमेण ते ॥ यस्मात्तस्माद्विजेतासि सर्वरक्षांस्यशेषतः ॥ ५० ॥ तत्राहं सर्वरात्रं तु विचिन्वञ्जनकात्मजाम् ॥ रावणांतःपुरगतो न चापश्यं सुमध्यमाम् ॥ ५१ ॥ ततः सीतामपश्यंस्तु रावणस्य निवेशने ॥ शोकसागरमासाद्य न पारमुपलक्षये ॥ ५२ ॥

शोचता च मया दृष्टं प्राकारेणाभिसंवृतम् ॥ कांचनेन विचित्रेण गृहोपवन-मुत्तमम् ॥ ५३ ॥ सप्राकारमवप्लुत्य पश्यामि बहुपादपम् ॥ ५४ ॥ अशोकव-निकामध्ये शिंशपापादपो महान् ॥ तमारुह्य च पश्यामि कांचनं कदलीवनम् ॥ ५५ ॥ अदूराच्छिंशपावृक्षात्पश्यामि वरवर्णिनीम् ॥ श्यामां कमलपत्राक्षी-मुपवासकृशाननाम् ॥ ५६ ॥ तदेकवासःसंवीतां रजोध्वस्तशिरोरुहाम् ॥ शोकसंतापदीनांगीं सीतां भर्तृहिते स्थिताम् ॥ ५७ ॥ राक्षसीभिर्विरूपाभिः क्रूराभिरभिसंवृताम् ॥ मांसशोणितभक्ष्याभिर्व्याघ्रीभिर्हरिणी यथा ॥ ५८ ॥ सा मया राक्षसीमध्ये भर्त्स्यमाना मुहुर्मुहुः ॥ एकवेणीधरा दीना भर्तृचिंता-परायणा ॥ ५९ ॥ भूमिशय्या विवर्णांगी पद्मिनीव हिमागमे ॥ रावणाद्विनि-वृत्तार्था मर्तव्ये कृतनिश्चया ॥ कथंचिन्मृगशावाक्षी तूर्णमासादिता मया ॥ ६० ॥ तां दृष्ट्वा तादृशीं नारीं रामपत्नीं यशस्विनीम् ॥ तत्रैव शिंशपावृक्षे पश्यन्नहमवस्थितः ॥ ६१ ॥ ततो हलहलाशब्दं कांचीनूपुरमिश्रितम् ॥ शृणो-

भ्यधिकगंभीरं रावणस्य निवेशने ॥ ६२ ॥ ततोऽहं परमोद्विग्नः स्वरूपं प्रत्यसंहरम् ॥ अहं च शिंशपावृक्षे पक्षीव गहने स्थितः ॥ ६३ ॥ ततो रावणदाराश्च रावणश्च महाबलः ॥ तं देशमनुसंप्राप्तो यत्र सीताभवत्स्थिता ॥ ६४ ॥ तं दृष्ट्वाथ वरारोहा सीता रक्षोगणेश्वरम् ॥ संकुच्योरू स्तनौ पीनौ बाहुभ्यां परिरभ्य च ॥ प्रावेपत वरारोहा प्रवाते कदली यथा ॥ ६५ ॥ वित्रस्तां परमोद्विग्नां वीक्षमाणामितस्ततः ॥ त्राणं किंचिदपश्यंतीं वेपमानां तपस्विनीम् ॥ ६६ ॥ तामुवाच दशग्रीवः सीतां परमदुःखिताम् ॥ अवाक्शिराः प्रपतितो बहु मन्यस्व मामिति ॥ ६७ ॥ यदि चेत्त्वं तु मां दर्पान्नाभिनंदसि गर्विते ॥ द्विमासानंतरं सीते पास्यामि रुधिरं तव ॥ ६८ ॥ एतच्छ्रुत्वा वचस्तस्य रावणस्य दुरात्मनः ॥ उवाच परमक्रुद्धा सीता वचनमुत्तरम् ॥ ६९ ॥ राक्षसाधम रामस्य भार्याममिततेजसः ॥ इक्ष्वाकुवंशनाथस्य स्नुषां दशरथस्य च ॥ अवाच्यं वदतो जिह्वा कथं न पतिता तव ॥ ७० ॥ किंस्विद्वीर्यं तवानार्य यो मां भर्तुरसंनिधौ ॥

अपहृत्यागतः पाप तेनादृष्टो महात्मना ॥ ७१ ॥ न त्वं रामस्य सदृशो दास्येऽप्यस्य न युज्यसे ॥ अजेयः सत्यवाक्शूरो रणश्लाघी च राघवः ॥७२॥ जानक्या परुषं वाक्यमेवमुक्तो दशाननः ॥ जज्वाल सहसा कोपाच्चितास्थ इव पावकः ॥७३॥ विवृत्य नयने क्रूरे मुष्टिमुद्यम्य दक्षिणम् ॥ मैथिलीं हंतुमारब्धः स्त्रीभिर्हाहाकृतं तदा ॥ ७४ ॥ स्त्रीणां मध्यात्समुत्पत्य तस्य भार्या दुरात्मनः ॥ वरा मंदोदरी नाम तया स प्रतिषेधितः ॥ ७५ ॥ उक्तश्च मधुरां वाणीं तया स मदनार्दितः ॥ सीतया तव किं कार्यं महेंद्रसमविक्रम ॥ मया सह रमस्वाद्य मद्विशिष्टा न जानकी ॥७६॥ देवगंधर्वकन्याभिर्यक्षकन्याभिरेव च ॥ सार्धं प्रभो रमस्वेति सीतया किं करिष्यसि ॥ ७७ ॥ ततस्ताभिः समेताभिर्नारीभिः स महाबलः ॥ उत्थाप्य सहसा नीतो भवनं स्वं निशाचरः ॥७८॥ याते तस्मिन्दशग्रीवे राक्षस्यो विकृताननाः ॥ सीतां निर्भर्त्सयामासुर्वाक्यैः क्रूरैः सुदारुणैः ॥७९॥ तृणवद्भाषितं तासां गणयामास जानकी ॥ गर्जितं च तथा तासां सीतां

प्राप्य निरर्थकम् ॥८०॥ वृथागर्जितनिश्चेष्टा राक्षस्यः पिशिताशनाः ॥ रावणाय शशंसुस्ताः सीताव्यवसितं महत् ॥ ८१ ॥ ततस्ताः सहिताः सर्वा विहताशा निरुद्यमाः ॥ परिक्षिप्य समन्तात्ता निद्रावशमुपागताः ॥८२॥ तासु चैव प्रसुप्तासु सीता भर्तृहिते रता ॥ विलप्य करुणं दीना प्रशुशोच सुदुःखिता ॥८३॥ तासां मध्यात्समुत्थाय त्रिजटा वाक्यमब्रवीत् ॥८४॥ आत्मानं खादत क्षिप्रं न सीतामसितेक्षणाम् ॥ जनकस्यात्मजां साध्वीं स्नुषां दशरथस्य च ॥८५॥ स्वप्नो ह्यद्य मया दृष्टो दारुणो रोमहर्षणः ॥ रक्षसां च विनाशाय भर्तुरस्या जयाय च ॥ ८६ ॥ अलमस्मान् परित्रातुं राघवाद्राक्षसीगणम् ॥ अभियाचाम वैदेहीमेतद्धि मम रोचते ॥ ८७ ॥ यस्या ह्येवंविधः स्वप्नो दुःखितायाः प्रदृश्यते ॥ सा दुःखैर्विविधैर्मुक्ता सुखं प्राप्नोत्यनुत्तमम् ॥ ८८ ॥ प्रणिपातप्रसन्ना हि मैथिली जनकात्मजा ॥ अलमेषा परित्रातुं राक्षस्यो महतो भयात् ॥ ८९ ॥ ततः सा ह्रीमती बाला भर्तुर्विजयहर्षिता ॥ अवोचद्यदि तत्तथ्यं भवेयं शरणं हि

वः ॥९०॥ तां चाहं तादृशीं दृष्ट्वा सीताया दारुणां दशाम् ॥ चिंतयामास विश्रांतो न च मे निर्वृतं मनः ॥ ९१ ॥ संभाषणार्थं च मया जानक्याश्चिंतितो विधिः ॥ इक्ष्वाकुकुलवंशस्तु स्तुतो मम पुरस्कृतः ॥ ९२ ॥ श्रुत्वा तु गदितां वाचं राजर्षिगणभूषिताम् ॥ प्रत्यभाषत मां देवी बाष्पैः पिहितलोचना ॥ ९३ ॥ कस्त्वं केन कथं चेह प्राप्तो वानरपुंगव ॥ का च रामेण ते प्रीतिस्तन्मे वांसितुमर्हसि ॥ ९४ ॥ तस्यास्तद्वचनं श्रुत्वा अहमप्यब्रवं वचः ॥ ९५ ॥ देवि रामस्य भर्तुस्ते सहायो भीमविक्रमः ॥ सुग्रीवो नाम विक्रांतो वानरेंद्रो महाबलः ॥ ९६ ॥ तस्य मां विद्धि भृत्यं त्वं हनूमंतमिहागतम् ॥ भर्त्रा संप्रहितस्तुभ्यं रामेणाक्लिष्टकर्मणा ॥ ९७ ॥ इदं तु पुरुषव्याघ्रः श्रीमान्दाशरथिः स्वयम् ॥ अंगुलीयमभिज्ञानमदात्तुभ्यं यशस्विनि ॥ ९८ ॥ तदिच्छामि त्वयाज्ञप्तं देवि किं करवाण्यहम् ॥ रामलक्ष्मणयोः पार्श्वं नयामि त्वां किमुत्तरम् ॥ ९९ ॥ एतच्छ्रुत्वा विदित्वा च सीता जनकनंदिनी ॥ आह रावणमुत्पाट्य राघवो मां

नर्थात्विति ॥ १०० ॥ प्रणम्य शिरसा देवीमहमार्यामनिंदिताम् ॥ राघवस्य मनोह्लादमभिज्ञानमयाचिषम् ॥ १ ॥ अथ मामब्रवीत्सीता गृह्यतामयमुत्तमः ॥ मणिर्येन महाबाहू रामस्त्वां बहु मन्यते ॥ २ ॥ इत्युक्त्वा तु वरारोहा मणिप्रवरमुत्तमम् ॥ प्रायच्छत्परमोद्विग्ना वाचा मां संदिदेश ह ॥ ३ ॥ ततस्तस्यै प्रणम्याहं राजपुत्र्यै समाहितः ॥ प्रदक्षिणं परिक्राममिहाभ्युद्गतमानसः ॥ ४ ॥ उत्तरं पुनरेवाह निश्चित्य मनसा तदा ॥ हनूमन्मम वृत्तांतं वक्तुमर्हसि राघवे ॥ ५ ॥ यथा श्रुत्वैव न चिरात्तावुभौ रामलक्ष्मणौ ॥ सुग्रीवसहितौ वीरावुपेयातां तथा कुरु ॥ ६ ॥ यदन्यथा भवेदेतद्द्वौ मासौ जीवितं मम ॥ न मां द्रक्ष्यति काकुत्स्थो म्रिये साहमनाथवत् ॥ ७ ॥ तच्छ्रुत्वा करुणं वाक्यं क्रोधो मामभ्यवर्धत ॥ उत्तरं च मया दृष्टं कार्यशेषमनंतरम् ॥ ८ ॥ ततोऽवर्धत मे कायस्तदा पर्वतसंनिभः ॥ युद्धाकांक्षी वनं तस्य विनाशयितुमारभे ॥ ९ ॥ तद्भग्नं वनखंडं तु भ्रांतत्रस्तमृगद्विजम् ॥ प्रतिबुध्य निरीक्षंते राक्षस्यो विकृताननाः

॥ ११० ॥ मां च दृष्ट्वा वने तस्मिन् समागम्य ततस्ततः ॥ ताः समभ्यागताः क्षिप्रं रावणायाचचक्षिरे ॥ ११ ॥ राजन्वनमिदं दुर्गं तव भग्नं दुरात्मना ॥ वानरेण ह्यविज्ञाय तव वीर्यं महाबल ॥ १२ ॥ तस्य दुर्बुद्धिता राजंस्तव विप्रियकारिणः ॥ वधमाज्ञापय क्षिप्रं यथासौ विलयं व्रजेत् ॥१३॥ तच्छ्रुत्वा राक्षसेंद्रेण विसृष्टा भृशदुर्जयाः ॥ राक्षसाः किंकरा नाम रावणस्य मनोनुगाः ॥ १४ ॥ तेषामशीतिसाहस्रं शूलमुद्गरपाणिनाम् ॥ मया तस्मिन्वनोद्देशे परिघेण निषूदितम् ॥ १५ ॥ तेषां तु हतशिष्टा ये ते गता लघुविक्रमाः ॥ निहतं च मया सैन्यं रावणायाचचक्षिरे ॥ १६ ॥ ततो मे बुद्धिरुत्पन्ना चैत्यप्रासादभंजने ॥ तत्रस्थान्राक्षसान्हत्वा शतं स्तंभेन वै पुनः ॥ ललामभूतो लंकाया मया विध्वंसितो रुषा ॥ १७ ॥ ततः प्रहस्तस्य सुतं जंबुमालिनमादिशत् ॥ राक्षसैर्बहुभिः सार्धं घोररूपैर्भयानकैः ॥ १८ ॥ तमहं बलसंपन्नं राक्षसं रणकोविदम् ॥ परिघेणातिघोरेण सूदयामि सहानुगम् ॥ १९ ॥ तच्छ्रुत्वा राक्षसेंद्रस्तु मंत्रिपुना-

न्महाबलान् ॥ पदातिबलसंपन्नान् प्रेषयामास रावणः ॥ १२० ॥ परिघेणैव तान्सर्वान्नयामि यमसादनम् ॥ २१ ॥ मंत्रिपुत्रान्हताञ्छ्रुत्वा समरे लघुविक्रमान् ॥ पंच सेनाग्रगाञ्छूरान् प्रेषयामास रावणः ॥ २२ ॥ तानहं सह सैन्येन सर्वानेवाभ्यसूदयम् ॥ २३ ॥ ततः पुनर्दशग्रीवः पुत्रमक्षं महाबलम् ॥ बहुभी राक्षसैः सार्धं प्रेषयामास संयुगे ॥ २४ ॥ तं तु मंदोदरीपुत्रं कुमारं रणपंडितम् ॥ सहसा खं समुत्क्रांतं पादयोश्च गृहीतवान् ॥ चर्मासिनं शतगुणं भ्रामयित्वा व्यपेषयम् ॥ २५ ॥ तमक्षमागतं भग्नं निशम्य स दशाननः ॥ ततश्चेंद्रजितं नाम द्वितीयं रावणः सुतम् ॥ व्यादिदेश सुसंक्रुद्धो बलिनं युद्धदुर्मदम् ॥ २६ ॥ तच्चाप्यहं बलं सर्वं तं च राक्षसपुंगवम् ॥ नष्टौजसं रणे कृत्वा परं हर्षमुपागतः ॥ २७ ॥ महतापि महाबाहुः प्रत्ययेन महाबलः ॥ प्रहितो रावणेनैष सह वीरैर्मदोद्धतैः ॥ २८ ॥ सोऽविषह्यं हि मां बुध्वा स्वसैन्यं चावमर्दितम् ॥ ब्रह्मणोऽस्त्रेण स तु मां प्राबध्नाच्चातिवेगतः ॥ २९ ॥ रज्जुभिश्चापि

वध्नंति ततो मां तत्र राक्षसाः ॥ रावणस्य समीपं च गृहीत्वा मामुपागमन् ॥ १३० ॥ दृष्ट्वा संभाषितश्चाहं रावणेन दुरात्मना ॥ पृष्टश्च लंकागमनं राक्षसानां च तं वधम् ॥ ३१ ॥ तत्सर्वं च मया तत्र सीतार्थमुपजल्पितम् ॥ ३२ ॥ अस्याहं दर्शनाकांक्षी प्राप्तस्त्वद्भवनं विभो ॥ मारुतस्यौरसः पुत्रो वानरो हनुमानहम् ॥३३॥ रामदूतं च मां विद्धि सुग्रीवसचिवं कपिम् ॥ सोऽहं दौत्येन रामस्य त्वत्सकाशमिहागतः ॥ ३४ ॥ शृणु चापि समादेशं यदहं प्रब्रवीमि ते राक्षसेश हरीशस्त्वां वाक्यमाह समाहितम् ॥३५॥ सुग्रीवश्च महाभाग स त्वां कौशलमब्रवीत् ॥ धर्मार्थकामोपहितं हितं पथ्यमुवाच ह ॥३६॥ वसतो ऋष्यमूके मे पर्वते विपुलद्रुमे ॥ राघवो रणविक्रांतो मित्रत्वं समुपागतः ॥ ३७॥ तेन मे कथितं राजन्भार्या मे रक्षसा हृता ॥ तत्र साहाय्यमस्माकं कार्यं सर्वात्मना त्वया ॥ ३८ ॥ मया च कथितं तस्मै वालिनश्च वधं प्रति ॥ तत्र साहाय्यहेतोर्मे समयं कर्तुमर्हसि ॥ ३९ ॥ वालिना हृतराज्येन सुग्रीवेण सह प्रभुः ॥ चक्रे-

ऽग्निसाक्षिकं सख्यं राघवः सहलक्ष्मणः ॥१४०॥ तेन वालिनमाहत्य शरेणैकेन संयुगे ॥ वानराणां महाराजः कृतः स प्लवतां प्रभुः ॥ ४१ ॥ तस्य साहाय्यमस्माभिः कार्यं सर्वात्मना त्विह ॥ तेन प्रस्थापितस्तुभ्यं समीपमिह धर्मतः ॥४२॥ क्षिप्रमानीयतां सीता दीयतां राघवस्य च ॥ यावन्न हरयो वीरा विधमंति बलं तव ॥ ४३ ॥ वानराणां प्रभावोऽयं न केन विदितः पुरा ॥ देवतानां सकाशं च ये गच्छंति निमंत्रिताः ॥ ४३ ॥ इति वानरराजस्त्वामाहेत्यभिहितो मया ॥ मामैक्षत ततो रुष्टश्चक्षुषा प्रदहन्निव ॥ ४५ ॥ तेन वध्योऽहमाज्ञप्तो रक्षसा रौद्रकर्मणा ॥ मत्प्रभावमविज्ञाय रावणेन दुरात्मना ॥ ४६ ॥ ततो विभीषणो नाम तस्य भ्राता महामतिः ॥ तेन राक्षसराजश्च याचितो मम कारणात् ॥४७॥ नैवं राक्षसशार्दूल त्यज्यतामेष निश्चयः ॥ राजशास्त्रव्यपेतो हि मार्गः संसेव्यते त्वया ॥ ४८ ॥ दूतवध्या न दृष्टा हि राजशास्त्रेषु राक्षस ॥ दूतेन वेदितव्यं हि यथार्थं हितवादिना ॥ ४९ ॥ सुमहत्यपराधेऽपि दूतस्यातुलविक्रम ॥

विरूपकरणं दृष्टं न वधोऽस्ति हि शास्त्रतः ॥५०॥ बिभीषणेनैवमुक्तो रावणः संदिदेश तान् ॥ राक्षसानेतदेवास्य लांगूलं दह्यतामिति ॥ ५१ ॥ ततस्तस्य वचः श्रुत्वा मम पुच्छं समंततः ॥ वेष्टितं शणवल्कैश्च जीर्णैः कार्पासकैः पटैः ॥ ५२ ॥ राक्षसाः सिद्धसंनाहास्ततस्ते चंडविक्रमाः ॥ तदादीप्यंत मे पुच्छं निघ्नंतः काष्ठमुष्टिभिः ॥ ५३ ॥ बद्धस्य बहुभिः पाशैर्यन्त्रितस्य च राक्षसैः ॥ न मे पीडा भवेत्काचिद्दिदृक्षोर्नगरीं दिवा ॥ ५४ ॥ ततस्ते राक्षसाः शूरा बद्धं मामग्निसंवृतम् ॥ अघोषयन्राजमार्गे नगरद्वारमागताः ॥५५॥ ततोऽहं सुमहद्रूपं संक्षिप्य पुनरात्मनः ॥ विमोचयित्वा तं बंधं प्रकृतिस्थस्ततः पुनः ॥ ५६ ॥ आयसं परिघं गृह्य तानि रक्षांस्यसूदयम् ॥ ततस्तन्नगरद्वारं वेगेनाप्लुतवानहम् ॥ ५७ ॥ पुच्छेन च प्रदीप्तेन तां पुरीं साट्टगोपुराम् ॥ दहाम्यहमसंभ्रांतो युगांताग्निरिव प्रजाः ॥ ५८ ॥ ततो मे ह्यभवत्त्रासो लंकां दग्धां समीक्ष्य तु ॥ विनष्टा जानकी व्यक्तं नह्यदग्धः प्रदृश्यते ॥ लंकायाः कश्चिदुद्देशः सर्वा भस्मीकृता

पुरी ॥५९॥ दहता च मया लंकां दग्धा सीता न संशयः ॥ रामस्य च महत्कार्यं मयेदं विफलीकृतम् ॥ इति शोकसमाविष्टश्चिंतामहमुपागतः ॥१६०॥ ततोऽहं वाचमश्रौषं चारणानां शुभाक्षराम् ॥ ६१ ॥ जानकी न च दग्धेति विस्मयोदात्तभाषिणाम् ॥ ६२ ॥ ततो मे बुद्धिरुत्पन्ना श्रुत्वा तामद्भुतां गिरम् ॥ अदग्धा जानकीत्येव निमित्तैश्चोपलक्षिता ॥ ६३ ॥ दीप्यमाने तु लांगूले न मां दहति पावकः ॥ हृदयं च प्रहृष्टं मे वाताः सुरभिगंधिनः ॥ ६४ ॥ तैर्निमित्तैश्च दृष्टार्थैः कारणैश्च महागुणैः ॥ ऋषिवाक्यैश्च सिद्धार्थैरभवं हृष्टमानसः ॥ ६५ ॥ पुनर्दृष्ट्वा च वैदेहीं विसृष्टश्च तया पुनः ॥ ६६ ॥ ततः पर्वतमासाद्य तत्रारिष्टमहं पुनः ॥ प्रतिप्लवनमारेभे युष्मद्दर्शनकांक्षया ॥ ६७ ॥ ततः श्वसनचंद्रार्कसिद्धगंधर्वसेवितम् ॥ पंथानमहमाक्रम्य भवतो दृष्टवानिह ॥ ६८ ॥ राघवस्य प्रसादेन भवतां चैव तेजसा ॥ सुग्रीवस्य च कार्यार्थं मया सर्वमनुष्ठितम् ॥ ६९ ॥ एतत्सर्वं मया तत्र यथावदुपपादितम् ॥ तत्र यन्न कृतं शेषं तत्सर्वं

क्रियतामिति ॥ १५० ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुन्दरकांडेऽष्टपंचाशः सर्गः ॥ ५८ ॥

---

## एकोनषष्टितमः सर्गः ५९

एतदाख्याय तत्सर्वं हनूमान्मारुतात्मजः ॥ भूयः समुपचक्राम वचनं वक्तुमुत्तरम् ॥१॥ सफलो राघवोद्योगः सुग्रीवस्य च संभ्रमः ॥ शीलमासाद्य सीताया मम च प्रीणितं मनः ॥ २ ॥ तपसा धारयेल्लोकान्क्रुद्धो वा निर्दहेदपि ॥ सर्वथातिप्रकृष्टोऽसौ रावणो राक्षसेश्वरः ॥ यस्य तां स्पृशतो गात्रं तपसा न विनाशितम् ॥ ३ ॥ न तदग्निशिखा कुर्यात्संस्पृष्टा पाणिना सती ॥ जनकस्य सुता कुर्याद्यत्क्रोधकलुषीकृता ॥४॥ जांबवत्प्रमुखान्सर्वाननुज्ञाप्य महाकपीन् ॥ अस्मिन्नेवं गते कार्ये भवतां च निवेदिते ॥ न्याय्यं स्म सह वैदेह्या द्रष्टुं तौ पार्थिवात्मजौ ॥ ५ ॥ अहमेकोऽपि पर्याप्तः सराक्षसगणां पुरीम् ॥ तां लंकां

तरसा हंतुं रावणं च सराक्षसम् ॥ ६ ॥ किं पुनः सहितो वीरैर्बलवद्भिः कृतात्मभिः ॥ कृतास्त्रैः प्लवगैः शक्तैर्भवद्भिर्विजयैषिभिः ॥ ७ ॥ अहं तु रावणं युद्धे ससैन्यं सपुरःसरम् ॥ सहपुत्रं वधिष्यामि सहोदरयुतं युधि ॥ ८ ॥ ब्राह्ममस्त्रं च रौद्रं च वायव्यं वारुणं तथा ॥ यदि शक्रजितोऽस्त्राणि दुर्निरीक्ष्याणि संयुगे ॥ ९ ॥ तान्यहं निहनिष्यामि विधमिष्यामि राक्षसान् ॥ भवतामभ्यनुज्ञातो विक्रमो मे रुणद्धि तम् ॥१०॥ मयाऽतुला विसृष्टा हि शैलवृष्टिर्निरंतरा ॥ देवानपि रणे हन्यात्किं पुनस्तान्निशाचरान् ॥ ११ ॥ सागरोऽप्यतियाद्वेलां मंदरः प्रचलेदपि ॥ न जांबवंतं समरे कंपयेदरिवाहिनी ॥ १२ ॥ सर्वराक्षससंघानां राक्षसा ये च पूर्वजाः ॥ अलमेकोऽपि नाशाय वीरो वालिसुतः कपिः ॥१३॥ पनसस्योरुवेगेन नीलस्य च महात्मनः ॥ मंदरोऽप्यवशीर्येत किं पुनर्युधि राक्षसाः ॥ १४ ॥ सदेवासुरयक्षेषु गंधर्वोरगपक्षिषु ॥ मैंदस्य प्रतियोद्धारं शंसत द्विविदस्य वा ॥ १५ ॥ अश्विपुत्रौ महावेगावेतौ प्लवगसत्तमौ ॥ एतयोः

प्रतियोद्धारं न पश्यामि रणाजिरे ॥१६॥ मयैव निहता लंका दग्धा भस्मीकृता पुरी ॥ राजमार्गेषु सर्वेषु नाम विश्रावितं मया ॥ १७ ॥ जयत्यतिबलो रामो लक्ष्मणश्च महाबलः ॥ राजा जयति सुग्रीवो राघवेणाभिपालितः ॥ १८ ॥ अहं कोसलराजस्य दासः पवनसंभवः ॥ हनूमानिति सर्वत्र नाम विश्रावितं मया ॥ १९ ॥ अशोकवनिकामध्ये रावणस्य दुरात्मनः ॥ अधस्ताच्छिंशपामूले साध्वी करुणमास्थिता ॥ २० ॥ राक्षसीभिः परिवृता शोकसंतापकर्शिता ॥ मेघजालैः परिवृता चंद्ररेखेव निष्प्रभा ॥ २१ ॥ अचिंतयंती वैदेही रावणं बलदर्पितम् ॥ पतिव्रता च सुश्रोणी अवष्टब्धा च जानकी ॥ २२ ॥ अनुरक्ता हि वैदेही रामं सर्वात्मना शुभा ॥ अनन्यचित्ता रामे च पौलोमीव पुरंदरे ॥ २३ ॥ तदेक-वासःसंवीता रजोध्वस्ता तथैव च ॥ शोकसंतापदीनांगी सीता भर्तृहिते रता ॥ २४ ॥ सा मया राक्षसीमध्ये तर्ज्यमाना मुहुर्मुहुः ॥ राक्षसीभिर्विरूपाभिर्दृष्टा हि प्रमदावने ॥ २५ ॥ एकवेणीधरा दीना भर्तृचिंतापरायणा ॥ अधःशय्या

विवर्णांगी पद्मिनीव हिमोदये ॥२६॥ रावणाद्विनिवृत्तार्था मर्तव्यकृतनिश्चया ॥ कथंचिन्मृगशावाक्षी विश्वासमुपपादिता ॥ २७ ॥ ततः संभाषिता चैव सर्वमर्थं प्रकाशिता ॥ रामसुग्रीवसख्यं च श्रुत्वा प्रीतिमुपागता ॥ २८ ॥ नियतः समुदाचारो भक्तिर्भर्तरि चोत्तमा ॥ २९ ॥ यन्न हंति दशग्रीवं स महात्मा दशाननः ॥ निमित्तमात्रं रामस्तु वधे तस्य भविष्यति ॥ ३० ॥ सा प्रकृत्यैव तन्वंगी तद्वियोगाच्च कर्शिता ॥ प्रतिपत्पाठशीलस्य विद्येव तनुतां गता ॥ ३१ ॥ एवमास्ते महाभागा सीता शोकपरायणा ॥ यदत्र प्रतिकर्तव्यं तत्सर्वमुपकल्प्यताम् ॥ ३२ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुंदरकांड एकोनषष्टितमः सर्गः ॥ ५९ ॥

## षष्टितमः सर्गः ६०

तस्य तद्वचनं श्रुत्वा वालिसूनुरभाषत ॥ १ ॥ अश्विपुत्रौ महावेगौ बलवंतौ

प्लवंगमौ ॥ पितामहवरोत्सेकात्परमं दर्पमास्थितौ ॥ २ ॥ अश्विनोर्माननार्थं हि सर्वलोकपितामहः ॥ सर्वावध्यत्वमतुलमनयोर्दत्तवान्पुरा ॥ ३ ॥ वरोत्सेकेन मत्तौ च प्रमथ्य महतीं चमूम् ॥ सुराणाममृतं वीरौ पीतवंतौ महाबलौ ॥ ४ ॥ एतावेव हि संक्रुद्धौ सवाजिरथकुंजराम् ॥ लंकां नाशयितुं शक्तौ सर्वे तिष्ठंतु वानराः ॥ ५ ॥ अहमेकोऽपि पर्याप्तः सराक्षसगणां पुरीम् ॥ तां लंकां तरसा हंतुं रावणं च महाबलम् ॥ ६ ॥ किं पुनः सहितो वीरैर्बलवद्भिः कृतात्मभिः ॥ कृतास्त्रैः प्लवगैः शक्तैर्भवद्भिर्विजयैषिभिः ॥ वायुसूनोर्बलेनैव दग्धा लंकेति नः श्रुतम् ॥ ७ ॥ अयुक्तं तु विना देवीं दृष्टवद्भिश्च वानराः ॥ समीपं गंतुमस्माभी राघवस्य महात्मनः ॥ ८ ॥ दृष्टा देवी न चानीता इति तत्र निवेदितुम् ॥ न युक्तमिव पश्यामि भवद्भिः ख्यातपौरुषैः ॥ ९ ॥ न हि वः प्लवने कश्चिन्नापि कश्चित्पराक्रमे ॥ तुल्यः सामरदैत्येषु लोकेषु हरिसत्तमाः ॥ १० ॥ जित्वा लंकां सरक्षौघां हत्वा तं रावणं रणे ॥ सीतामादाय गच्छामः सिद्धार्था हृष्टमानसाः

॥ ११ ॥ तेष्वेवं हतशेषेषु राक्षसेषु हनूमता ॥ किमन्यदत्र कर्तव्यं गृहीत्वा याम जानकीम् ॥ १२ ॥ रामलक्ष्मणयोर्मध्ये न्यस्याम जनकात्मजाम् ॥ किं व्यलीकैस्तु तान्सर्वान्वानरान्वानरर्षभान् ॥ १३ ॥ वयमेव हि गत्वा तान्हत्वा राक्षसपुंगवान् ॥ राघवं द्रष्टुमर्हामः सुग्रीवं सहलक्ष्मणम् ॥ १४ ॥ तमेवं कृतसंकल्पं जांववान्हरिसत्तमः ॥ उवाच परमप्रीतो वाक्यमर्थवदर्थवित् ॥ १५ ॥ नैषा बुद्धिर्महाबुद्धे यद्ब्रवीषि महाकपे ॥ विचेतुं वयमाज्ञप्ता दक्षिणां दिशमुत्तमाम् ॥ १६ ॥ नानेतुं कपिराजेन नैव रामेण धीमता ॥ कथंचिन्निर्जितां सीतामस्माभिर्नाभिरोचयेत् ॥ १७ ॥ राघवो नृपशार्दूलः कुलं व्यपदिशन्स्वकम् ॥ प्रतिज्ञाय स्वयं राजा सीताविजयमग्रतः ॥ सर्वेषां कपिमुख्यानां कथं मिथ्या करिष्यति ॥ १८ ॥ विफलं कर्म च कृतं भवेत्तुष्टिर्न तस्य च ॥ वृथा च दर्शितं वीर्यं भवेद्वानरपुंगवाः ॥ १९ ॥ तस्माद्गच्छाम वै सर्वे यत्र रामः सलक्ष्मणः ॥ सुग्रीवश्च महातेजाः कार्यस्यास्य निवेदने ॥ २० ॥ न तावदेषा मतिरक्षमा नो यथा

भवान्पश्यति राजपुत्र ॥ यथा तु रामस्य मतिर्निविष्टा तथा भवान्पश्यतु कार्यसिद्धिम् ॥ २१ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुंदरकांडे षष्टितमः सर्गः ॥ ६० ॥

---

## एकषष्टितमः सर्गः ६१

ततो जांबवतो वाक्यमगृह्णंत वनौकसः ॥ अंगदप्रमुखा वीरा हनूमांश्च महाकपिः ॥ १ ॥ प्रीतिमंतस्ततः सर्वे वायुपुत्रपुरःसराः ॥ महेंद्राद्रिं परित्यज्य पुप्लुवुः प्लवगर्षभाः ॥ २ ॥ मेरुमंदरसंकाशा मत्ता इव महागजाः ॥ छादयंत इवाकाशं महाकाया महाबलाः ॥ ३ ॥ सभाज्यमानं भूतैस्तमात्मवंतं महाबलम् ॥ हनूमंतं महावेगं वहंत इव दृष्टिभिः ॥ ४ ॥ राघवे चार्थनिर्वृत्तिं कर्तुं च परमं यशः ॥ समाधाय समृद्धार्थाः कर्मसिद्धिभिरुन्नताः ॥ ५ ॥ प्रियाख्या-

नोन्मुखाः सर्वे सर्वे युद्धाभिनंदिनः ॥ सर्वे रामप्रतीकारे निश्चितार्था मनस्विनः ॥ ६ ॥ प्लवमानाः खमाप्लुत्य ततस्ते काननौकसः ॥ नंदनोपममासेदुर्वनं द्रुमशतायुतम् ॥७॥ यत्तन्मधुवनं नाम सुग्रीवस्याभिरक्षितम् ॥ अधृष्यं सर्वभूतानां सर्वभूतमनोहरम् ॥ ८ ॥ यद्रक्षति महावीरः सदा दधिमुखः कपिः ॥ मातुलः कपिमुख्यस्य सुग्रीवस्य महात्मनः ॥ ९ ॥ ते तद्वनमुपागम्य बभूवुः परमोत्कटाः ॥ वानरा वानरेंद्रस्य मनःकांतं महावनम् ॥ १० ॥ ततस्ते वानरा हृष्टा दृष्ट्वा मधुवनं महत् ॥ कुमारमभ्ययाचंत मधूनि मधुपिंगलाः ॥ ११ ॥ ततः कुमारस्तान्वृद्धाञ्जांबवत्प्रमुखान्कपीन् ॥ अनुमान्य ददौ तेषां निसर्गं मधुभक्षणे ॥ १२ ॥ ततश्चानुमताः सर्वे सुसंहृष्टा वनौकसः ॥ मुदिताश्च ततस्ते च प्रनृत्यंति ततस्ततः ॥ १३ ॥ गायंति केचित्प्रहसंति केचिन्नृत्यंति केचित्प्रणमंति केचित् ॥ पठंति केचित्प्रचरंति केचित्प्लवंति केचित्प्रलपंति केचित् ॥ १४ ॥ परस्परं केचिदुपाश्रयंति परस्परं केचिदतिब्रुवंति ॥ द्रुमाद्द्रुमं केचिदभिद्रवंति क्षितौ

नगाग्रान्निपतंति केचित् ॥ १५ ॥ महीतलात्केचिदुदीर्णवेगा महद्द्रुमाग्राण्यभिसंपतंति ॥ गायंतमन्यः प्रहसन्नुपैति-रुदंतमन्यः प्ररुदन्नुपैति ॥ १६ ॥ नुदंतमन्यः प्रणदन्नुपैति समाकुलं तत्कपिसैन्यमासीत् ॥ न चात्र कश्चिन्न बभूव मत्तो न चात्र कश्चिन्न बभूव दृप्तः ॥ १७ ॥ ततो वनं तत्परिभक्ष्यमाणं द्रुमांश्च विध्वंसितपत्रपुष्पान् ॥ समीक्ष्य कोपाद्दधिवक्त्रनामा निवारयामास कपिः कपींस्तान् ॥ १८ ॥ स तैः प्रवृद्धैः परिभर्त्स्यमानो वनस्य गोप्ता हरिवृद्धवीरः ॥ चकार भूयो मतिमुग्रतेजा वनस्य रक्षां प्रति वानरेभ्यः ॥ १९ ॥ उवाच कांश्चित्परुषाण्यभीतमसक्तमन्यांश्च तलैर्जघान ॥ समेत्य कैश्चित्कलहं चकार तथैव साम्नोपजगाम कांश्चित् ॥ २० ॥ स तैर्मदादप्रतिवार्यवेगैर्बलाच्च तेन प्रतिवार्यमाणैः ॥ प्रधर्षणे त्यक्तभयैः समेत्य प्रकृष्यते चाप्यनवेक्ष्य दोषम् ॥ २१ ॥ नखैस्तुदंतो दशनैर्दशंतस्तलैश्च पादैश्च समापयंतः ॥ मदात्कपिं ते कपयः समंतान्महावनं

निर्विषयं च चक्रुः ॥ २२ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुंदरकांड एकषष्टितमः सर्गः ॥ ६१ ॥

---

## द्विषष्टितमः सर्गः ६२

तानुवाच हरिश्रेष्ठो हनूमान्वानरर्षभः ॥ अव्यग्रमनसो यूयं मधु सेवत वानराः ॥ अहमावर्जयिष्यामि युष्माकं परिपंथिनः ॥ १ ॥ श्रुत्वा हनुमतो वाक्यं हरीणां प्रवरोऽगदः ॥ प्रत्युवाच प्रसन्नात्मा पिबंतु हरयो मधु ॥ २ ॥ अवश्यं कृतकार्यस्य वाक्यं हनुमतो मया ॥ अकार्यमपि कर्तव्यं किमंग पुनरीदृशम् ॥३॥ अंगदस्य मुखाच्छ्रुत्वा वचनं वानरर्षभाः ॥ साधु साध्विति संहृष्टा वानराः प्रत्यपूजयन् ॥ ४ ॥ पूजयित्वांगदं सर्वे वानरा वानरर्षभम् ॥ जग्मुर्मधुवनं यत्र नदीवेग इव द्रुतम् ॥५॥ ते प्रविष्टा मधुवनं पालानाक्रम्य शक्तितः ॥

निसर्गाच्चातिपटवो दृष्ट्वा श्रुत्वा च मैथिलीम् ॥ पपुः सर्वे मधु तदा रसवत्फलमाददुः ॥ ६ ॥ उत्पत्य च ततः सर्वे वनपालान्समागतान् ॥ ताडयंति स्म शतशः सक्ता मधुवने तदा ॥ ७ ॥ मधूनि द्रोणमात्राणि बाहुभिः परिगृह्य ते ॥ पिबंति कपयः केचित्संघशस्तत्र हृष्टवत् ॥८॥ घ्नंति स्म सहिताः सर्वे भक्षयंति तथा परे ॥ ९ ॥ केचित्पीत्वाऽपविध्यंति मधूनि मधुपिंगलाः ॥ मधूच्छिष्टेन केचिच्च जघ्नुरन्योन्यमुत्कटाः ॥१०॥ अपरे वृक्षमूलेषु शाखा गृह्य व्यवस्थिताः ॥ अत्यर्थं च मदग्लानाः पर्णान्यास्तीर्य शेरते ॥ ११ ॥ उन्मत्तभूताः प्लवगा मधुमत्ताश्च हृष्टवत् ॥ क्षिपंत्यपि तथान्योन्यं स्खलंति च तथापरे ॥ १२ ॥ केचित्क्ष्वेलां प्रकुर्वंति केचित्कूजंति हृष्टवत् ॥ हरयो मधुना मत्ताः केचित्सुप्ता महीतले ॥ १३ ॥ धृष्टाः केचिद्धसंत्यन्ये केचित्कुर्वंति चेतरत् ॥ कृत्वा केचिद्वदंत्यन्ये केचिद्बुध्यंति चेतरत् ॥ १४ ॥ येऽप्यत्र मधुपालाः स्युः प्रेष्या दधिमुखस्य तु ॥ तेऽपि तैर्वानरैर्भीमैः प्रतिषिद्धा दिशो गताः ॥ १५ ॥ जानुभिश्च

प्रकृष्टाश्च देवमार्गं च दर्शिताः ॥ अब्रुवन्परमोद्विग्ना गत्वा दधिमुखं वचः ॥१६॥ हनूमता त्वद्वचनैर्हतं मधुवनं बलात् ॥ वयं च जानुभिर्घृष्टा देवमार्गं च दर्शिताः ॥ १७ ॥ तदा दधिमुखः क्रुद्धो वनपस्तत्र वानरः ॥ हतं मधुवनं श्रुत्वा सांत्वयामास तान्हरीन् ॥ १८ ॥ इहागच्छत गच्छामो वानरानतिदर्पितान् ॥ बलेन वारयिष्यामि प्रभुंजानान्मधूत्तमम् ॥ १९ ॥ श्रुत्वा दधिमुखस्येदं वचनं वानरर्षभाः ॥ पुनर्वीरा मधुवनं तेनैव सहिता ययुः ॥ २० ॥ मध्ये चैषां दधिमुखः सुप्रगृह्य महातरुम् ॥ समभ्यधावन्वेगेन सर्वे ते च प्लवंगमाः ॥ २१ ॥ ते शिलाः पादपांश्चैव पाषाणानपि वानराः ॥ गृहीत्वाऽभ्यगमन्क्रुद्धा यत्र ते कपिकुंजराः ॥ २२ ॥ ते स्वामिवचनं वीरा हृदयेष्ववसज्य तत् ॥ त्वरया ह्यभ्यधावंत सालतालशिलायुधाः ॥ २३ ॥ वृक्षस्थांश्च तलस्थांश्च वानरान्बलदर्पितान् ॥ अभ्यक्रामंस्ततो वीराः पालास्तत्र सहस्रशः ॥ २४ ॥ अथ दृष्ट्वा दधिमुखं क्रुद्धं वानरपुंगवाः ॥ अभ्यधावंत वेगेन हनुमत्प्रमुखास्तदा ॥ २५ ॥

सवृक्षं तं महाबाहुमापतंतं महाबलम् ॥ वेगवंतं विजग्राह बाहुभ्यां कुपितोऽंगदः ॥ २६ ॥ मदांधश्च न वेदैनमार्य कोऽयं ममेति सः ॥ अथैनं निष्पिपेषाशु वेगेन वसुधातले ॥२७॥ स भग्नबाहूरुमुखो विह्वलः शोणितोक्षितः ॥ प्रमुमोह महावीरो मुहूर्तं कपिकुंजरः ॥२८॥ स समाश्वास्य सहसा संक्रुद्धो राजमातुलः ॥ वानरान्वारयामास दंडेन मधुमोहितान् ॥ २९ ॥ स कथंचिद्विमुक्तस्तैर्वानरैर्वानरर्षभः ॥ उवाचैकांतमागत्य स्वान्भृत्यान्समुपागतान् ॥ ३० ॥ एतागच्छत गच्छामो भर्ता नो यत्र वानरः ॥ सुग्रीवो विपुलग्रीवः सह रामेण तिष्ठति ॥३१॥ सर्वं चैवांगदे दोषं श्रावयिष्यामि पार्थिवे ॥ अमर्षी वचनं श्रुत्वा घातयिष्यति वानरान् ॥ ३२ ॥ इष्टं मधुवनं ह्येतत्सुग्रीवस्य महात्मनः ॥ पितृपैतामहं दिव्यं देवैरपि दुरासदम् ॥ ३३ ॥ स वानरानिमान्सर्वान्मधुलुब्धान्गतायुषः ॥ घातयिष्यति दंडेन सुग्रीवः ससुहृज्जनान् ॥ ३४ ॥ वध्या ह्येते दुरात्मानो नृपाज्ञापरिपंथिनः ॥ अमर्षप्रभवो रोषः सफलो मे भविष्यति ॥ ३५ ॥ एवमुक्त्वा

दधिमुखो वनपालान् महाबलः ॥ जगाम सहसोत्पत्य वनपालैः समन्वितः ॥३६॥ निमेषांतरमात्रेण स हि प्राप्तो वनालयः ॥ सहस्रांशुसुतो धीमान्सुग्रीवो यत्र वानरः ॥ ३७ ॥ रामं च लक्ष्मणं चैव दृष्ट्वा सुग्रीवमेव च ॥ समप्रतिष्ठां जगतीमाकाशान्निपपात ह ॥ ३८॥ स निपत्य महावीरः सर्वैस्तैः परिवारितः ॥ हरिर्दधिमुखः पालैः पालानां परमेश्वरः ॥ ३९ ॥ स दीनवदनो भूत्वा कृत्वा शिरसि चांजलिम् ॥ सुग्रीवस्य शुभौ मूर्ध्ना चरणौ प्रत्यपीडयत् ॥४०॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुंदरकांडे द्विषष्टितमः सर्गः ॥ ६२ ॥

---

## त्रिषष्टितमः सर्गः ६३

ततो मूर्ध्ना निपतितं वानरं वानरर्षभः ॥ दृष्ट्वैवोद्विग्नहृदयो वाक्यमेतदुवाच ह ॥ १ ॥ उत्तिष्ठोत्तिष्ठ कस्मात्त्वं पादयोः पतितो मम ॥ अभयं ते भवेद्वीर

सत्यमेवाभिधीयताम् ॥ २ ॥ किं संभ्रमाद्धितं कृत्स्नं ब्रूहि यद्वक्तुमर्हसि ॥ कच्चि-न्मधुवने स्वस्ति श्रोतुमिच्छामि वानर ॥ ३ ॥ स समाश्वासितस्तेन सुग्रीवेण महात्मना ॥ उत्थाय स महाप्राज्ञो वाक्यं दधिमुखोऽब्रवीत् ॥ ४ ॥ नैवर्क्षरजसा राजन्न त्वया न च वालिना ॥ वनं निसृष्टपूर्वं ते नाशितं तत्तु वानरैः ॥ ५ ॥ न्यवारयमहं सर्वान्सहैभिर्वनचारिभिः ॥ अचिंतयित्वा मां हृष्टा भक्षयंति पिबंति च ॥ ६ ॥ एभिः प्रधर्षणायां च वानरा वनरक्षिभिः ॥ आमध्यचिंतयन्देव भक्षयंति पिबंति च ॥ ७ ॥ शिष्टमत्रापविध्यंति भक्षयंति तथाऽपरे ॥ निवार्य-माणास्ते सर्वे भ्रुवौ वै दर्शयंति हि ॥ ८ ॥ इमे हि संरब्धतरास्तथा तैः संप्रध-र्षिताः ॥ वारयंतो वनात्तस्मात्क्रुद्धैर्वानरपुंगवैः ॥ ९ ॥ ततस्तैर्बहुभिर्वीरैर्वानरैर्वा-नरर्षभ ॥ संरक्तनयनैः क्रोधाद्धरयः संप्रधर्षिताः ॥ १० ॥ पाणिभिर्निहताः केचित्केचिज्जानुभिराहताः ॥ प्रकृष्टाश्च यथाकामं देवमार्गं च दर्शिताः ॥ ११ ॥ एवमेते हताः शूरास्त्वयि तिष्ठति भर्तरि ॥ कृत्स्नं मधुवनं चैव प्रकामं तैश्च

भक्ष्यते ॥ १२ ॥ एवं विज्ञाप्यमानं तं सुग्रीवं वानरर्षभम् । अपृच्छत्तं महाप्राज्ञो लक्ष्मणः परवीरहा ॥ १३ ॥ किमयं वानरो राजन्वनपः प्रत्युपस्थितः ॥ कं चार्थमभिनिर्दिश्य दुःखितो वाक्यमब्रवीत् ॥१४॥ एवमुक्तस्तु सुग्रीवो लक्ष्मणेन महात्मना ॥ लक्ष्मणं प्रत्युवाचेदं वाक्यं वाक्यविशारदः ॥ १५ ॥ आर्य लक्ष्मण संप्राह वीरो दधिमुखः कपिः ॥ अंगदप्रमुखैर्वीरैर्भक्षितं मधु वानरैः ॥ १६ ॥ विचित्य दक्षिणामाशामागतैर्हरिपुंगवैः ॥ आगतैश्च प्रकृष्टं तद्यथा मधुवनं हि तैः ॥ १७ ॥ नैषामकृतकार्याणामीदृशः स्याद्व्यतिक्रमः ॥ वनं यदभिपन्नास्ते साधितं कर्म वानरैः ॥ १८ ॥ वार्यंतो भृशं प्राप्ताः पाला जानुभिराहताः ॥ तथा न गणितश्चायं कपिर्दधिमुखो बली ॥ पतिर्मम वनस्यायमस्माभिः स्थापितः स्वयम् ॥ १९ ॥ दृष्टा देवी न संदेहो न चान्येन हनूमता ॥ न ह्यन्यः साधने हेतुः कर्मणोऽस्य हनूमतः ॥ २० ॥ कार्यसिद्धिर्हनुमति मतिश्च हरिपुंगवे ॥ व्यवसायश्च वीर्यं च श्रुतं चापि प्रतिष्ठितम् ॥ २१ ॥ जांबवान्यत्र नेता स्यादंग-

दश्च महाबलः ॥ हनूमांश्चाप्यधिष्ठाता न तस्य गतिरन्यथा ॥ २२ ॥ अंगदप्रमुखैर्वीरैर्हतं मधुवनं किल ॥ विचित्य दक्षिणामाशामागतैर्हरिपुंगवैः ॥ २३ ॥ आगतैश्च प्रमथितं यथा मधुवनं हि तैः ॥ धर्षितं च वनं कृत्स्नमुपयुक्तं तु वानरैः ॥ २४ ॥ पातिता वनपालास्ते तदा जानुभिराहताः ॥ एतदर्थमयं प्राप्तो वक्तुं मधुरवागिह ॥ नाम्ना दधिमुखो नाम हरिः प्रख्यातविक्रमः ॥ २५ ॥ दृष्टा सीता महाबाहो सौमित्रे पश्य तत्त्वतः ॥ अभिगम्य यथा सर्वे पिबंति मधु वानराः ॥ २६ ॥ न चाप्यदृष्ट्वा वैदेहीं विश्रुताः पुरुषर्षभ ॥ वनं दत्तवरं दिव्यं धर्षयेयुर्वनौकसः ॥ २७ ॥ ततः प्रहृष्टो धर्मात्मा लक्ष्मणः सहराघवः ॥ श्रुत्वा कर्णसुखां वाणीं सुग्रीववदनाच्च्युताम् ॥ प्राहृष्यत भृशं रामो लक्ष्मणश्च महायशाः ॥ २८ ॥ श्रुत्वा दधिमुखस्यैवं सुग्रीवस्तु प्रहृष्य च ॥ वनपालं पुनर्वाक्यं सुग्रीवः प्रत्यभाषत ॥ २९ ॥ प्रीतोऽस्मि सौम्य यद्भुक्तं वनं तैः कृतकर्मभिः ॥ धर्षितं मर्षणीयं च चेष्टितं कृतकर्मणाम् ॥ ३० ॥ गच्छ शीघ्रं मधुवनं संरक्षस्व

त्वमेव हि ॥ शीघ्रं प्रेषय सर्वांस्तान्हनूमत्प्रमुखान्कपीन् ॥ ३१ ॥ इच्छामि शीघ्रं हनुमत्प्रधानाञ्छाखामृगांस्तान्मृगराजदर्पान् ॥ द्रष्टुं कृतार्थान्सह राघवाभ्यां श्रोतुं च सीताधिगमे प्रयत्नम् ॥ ३२ ॥ प्रीतिस्फीताक्षौ संप्रहृष्टौ कुमारौ दृष्ट्वा सिद्धार्थौ वानराणां च राजा ॥ अंगैः प्रहृष्टैः कार्यसिद्धिं विदित्वा बाह्वोरासन्नां सोऽतिमात्रं ननंद ॥ ३३ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुंदरकांडे त्रिषष्टितमः सर्गः ॥ ६३ ॥

---

## चतुःषष्टितमः सर्गः ६४

सुग्रीवेणैवमुक्तस्तु हृष्टो दधिमुखः कपिः ॥ राघवं लक्ष्मणं चैव सुग्रीवं चाभ्यवादयत् ॥ १ ॥ स प्रणम्य च सुग्रीवं राघवौ च महाबलौ ॥ वानरैः सहितः शूरैर्दिवमेवोत्पपात ह ॥ २ ॥ स यथैवागतः पूर्वं तथैव त्वरितं गतः ॥

निपत्य गगनाद्भूमौ तद्वनं प्रविवेश ह ॥ ३ ॥ स प्रविष्टो मधुवनं ददर्श हरियूथपान् ॥ विमदानुत्थितान्सर्वान् मेहमानान्मधूदकम् ॥ ४ ॥ स तानुपागमद्वीरो बध्वा करपुटांजलिम् ॥ उवाच वचनं श्लक्ष्णमिदं हृष्टवदंगदम् ॥ ५ ॥ सौम्य रोषो न कर्तव्यो यदेभिः परिवारणम् ॥ अज्ञानाद्रक्षिभिः क्रोधाद्भवंतः प्रतिषेधिताः ॥ श्रांतो दूरादनुप्राप्तो भक्षयस्व स्वकं मधु ॥ ६ ॥ युवराजस्त्वमीशश्च वनस्यास्य महाबलः ॥ मौर्ख्यात्पूर्वं कृतो रोषस्तद्भवान्क्षंतुमर्हति ॥ ७ ॥ आख्यातं हि मया गत्वा पितृव्यस्य तवानघ ॥ इहोपयानं सर्वेषामेतेषां वनचारिणाम् ॥ ८ ॥ भवदागमनं श्रुत्वा सहैभिर्वनचारिभिः ॥ प्रहृष्टो न तु रुष्टोऽसौ वनं श्रुत्वा प्रधर्षितम् ॥ ९ ॥ प्रहृष्टो मां पितृव्यस्ते सुग्रीवो वानरेश्वरः ॥ शीघ्रं प्रेषय सर्वांस्तानिति होवाच पार्थिवः ॥ १० ॥ श्रुत्वा दधिमुखस्यैतद्वचनं श्लक्ष्णमंगदः ॥ अब्रवीत्तान्हरिश्रेष्ठो वाक्यं वाक्यविशारदः ॥ ११ ॥ शंके श्रुतोऽयं वृत्तांतो रामेण हरियूथपाः ॥ तत्क्षमं नेह नः स्थातुं कृते कार्ये

परंतपाः ॥ १२ ॥ पीत्वा मधु यथाकामं विश्रांता वनचारिणः ॥ किं शेषं गमनं तत्र सुग्रीवो यत्र मे गुरुः ॥ १३ ॥ सर्वे यथा मां वक्ष्यंति समेत्य हरिपुंगवाः ॥ तथास्मि कर्ता कर्तव्ये भवद्भिः परवानहम् ॥ १४ ॥ नाज्ञापयितुमीशोऽहं युवराजोऽस्मि यद्यपि ॥ अयुक्तं कृतकर्माणो यूयं धर्षयितुं मया ॥ १५ ॥ ब्रुवतश्चांगदस्यैवं श्रुत्वा वचनमुत्तमम् ॥ प्रहृष्टमनसो वाक्यमिदमूचुर्वनौकसः ॥१६॥ एवं वक्ष्यति को राजन् प्रभुः सन्वानरर्षभ ॥ ऐश्वर्यमदमत्तो हि सर्वोऽहमिति मन्यते ॥ १७ ॥ तव चेदं सुसदृशं वाक्यं नान्यस्य कस्यचित् ॥ सन्नतिर्हि तवाख्याति भविष्यच्छुभभाग्यताम् ॥ १८ ॥ सर्वे वयमपि प्राप्तास्तत्र गंतुं कृतक्षणाः ॥ स यत्र हरिवीराणां सुग्रीवः पतिरव्ययः ॥ १९ ॥ त्वया ह्यनुक्तैर्हरिभिर्नैव शक्यं पदात्पदम् ॥ क्वचिद्गंतुं हरिश्रेष्ठ ब्रूमः सत्यमिदं तु ते ॥ २० ॥ एवं तु वदतां तेषामंगदः प्रत्यभाषत ॥ साधु गच्छाम इत्युक्त्वा खमुत्पेतुर्महाबलाः ॥ २१ ॥ उत्पतंतमनूत्पेतुः सर्वे ते हरियूथपाः ॥ कृत्वाकाशं निराकाशं यंत्रो-

त्क्षिप्ता इवोपलाः ॥ २२ ॥ तेंऽवरं सहसोत्पत्य वेगवंतः प्लवंगमाः ॥ विनदंतो महानादं घना वातेरिता यथा ॥ २३ ॥ अंगदे ह्यननुप्राप्ते सुग्रीवो वानरेश्वरः ॥ उवाच शोकसंतप्तं रामं कमललोचनम् ॥ २४ ॥ समाश्वसिहि भद्रं ते दृष्टा देवी न संशयः ॥ नागंतुमिह शक्यं तैरतीते समये हि नः ॥ २५ ॥ न मत्सकाशमागच्छेत्कृत्ये हि विनिपातिते ॥ युवराजो महाबाहुः प्लवतामंगदो वरः ॥ २६ ॥ यद्यप्यकृतकृत्यानामीदृशः स्यादुपक्रमः ॥ भवेत्तु दीनवदनो भ्रांतविप्लुतमानसः ॥ २७ ॥ पितृपैतामहं चैतत्पूर्वकैरभिरक्षितम् ॥ न मे मधुवनं हन्याददृष्ट्वा जनकात्मजाम् ॥ २८ ॥ कौसल्या सुप्रजा राम समाश्वसिहि सुव्रत ॥ दृष्टा देवी न संदेहो न चान्येन हनूमता ॥ २९ ॥ न ह्यस्य कर्मणो हेतुः साधने तद्विधो भवेत् ॥ हनूमतीह सिद्धिश्च मतिश्च मतिसत्तम ॥ व्यवसायश्च शौर्यं च सूर्ये तेज इव ध्रुवम् ॥ ३० ॥ जांबवान्यत्र नेता स्यादंगदश्च हरीश्वरः ॥ हनूमांश्चाप्यधिष्ठाता न तत्र गतिरन्यथा ॥ ३१ ॥ मा भूश्चिंतासमायुक्तः संप्रत्य-

मितविक्रमः ॥ ३२ ॥ इत्येवमुच्यमाने तु हरिराजेन राघवे ॥ ततः किलकिला-शब्दं शुश्रावासन्नमंबरे ॥ ३३ ॥ हनूमत्कर्मदृप्तानां नर्दतां काननौकसाम् ॥ किष्किंधामुपयातानां सिद्धिं कथयतामिव ॥ ३४ ॥ ततः श्रुत्वा निनादं तं कपीनां कपिसत्तमः ॥ आयतांचितलांगूलः सोऽभवद्धृष्टमानसः ॥ ३५ ॥ आजग्मुस्तेऽपि हरयो रामदर्शनकांक्षिणः ॥ अंगदं पुरतः कृत्वा हनूमंतं च वानरम् ॥३६॥ तेंऽगदप्रमुखा वीराः प्रहृष्टाश्च मुदान्विताः ॥ निपेतुर्हरिराजस्य समीपे राघवस्य च ॥ ३७ ॥ हनुमांश्च महाबाहुः प्रणम्य शिरसा ततः ॥ नियतामक्षतां देवीं राघवाय न्यवेदयत् ॥ ३८ ॥ निश्चितार्थे ततस्तस्मिन् सुग्रीवे पवनात्मजे ॥ लक्ष्मणः प्रीतिमान्वीरो बहुमानादवैक्षत ॥ ३९ ॥ प्रीत्या च रममाणोऽथ राघवः परवीरहा ॥ बहुमानेन महता हनुमंतमवैक्षत ॥ ४० ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुंदरकांडे चतुःषष्टितमः सर्गः ॥ ६४ ॥

## पंचषष्टितमः सर्गः ६५

ततः प्रस्रवणं शैलं ते गत्वा चित्रकाननम् ॥ प्रणम्य शिरसा रामं लक्ष्मणं च महाबलम् ॥ १ ॥ युवराजं पुरस्कृत्य सुग्रीवमभिवाद्य च ॥ प्रवृत्तिमथ सीतायाः प्रवक्तुमुपचक्रमे ॥ २ ॥ रावणांतःपुरे रोधं राक्षसीनां च तर्जनम् ॥ रामे समनुरागं च यश्चापि समयः कृतः ॥ एतदाख्याय ते सर्वं हरयो रामसंनिधौ ॥ ३ ॥ वैदेहीमक्षतां श्रुत्वा रामस्तूत्तरमब्रवीत् ॥४॥ क्व सीता वर्तते देवी कथं च मयि वर्तते ॥ एतन्मे सर्वमाख्यात वैदेहीं प्रति वानराः ॥ ५ ॥ रामस्य गदितं श्रुत्वा हरयो रामसंनिधौ ॥ चोदयंति हनूमंतं सीतावृत्तांतकोविदम् ॥६॥ श्रुत्वा तु वचनं तेषां हनूमान्मारुतात्मजः ॥ प्रणम्य शिरसा देव्यै सीतायै तां दिशं प्रति ॥ उवाच वाक्यं वाक्यज्ञः सीताया दर्शनं यथा ॥७॥ समुद्रं लंघयित्वाऽहं शतयोजनमायतम् ॥ अगच्छं जानकीं सीतां मार्गमाणो दिदृक्षया ॥८॥

तत्र लंकेति नगरी रावणस्य दुरात्मनः ॥ दक्षिणस्य समुद्रस्य तीरे वसति दक्षिणे ॥९॥ तत्र सीता मया दृष्टा रावणांतःपुरे सती ॥ त्वयि संन्यस्य जीवंती रामा राम मनोरथम् ॥१०॥ दृष्टा मे राक्षसीमध्ये तर्ज्यमाना मुहुर्मुहुः ॥ राक्षसीभिर्विरूपाभी रक्षिता प्रमदावने ॥ ११ ॥ दुःखमापद्यते देवी त्वया वीर सुखोचिता ॥ १२ ॥ रावणांतःपुरे रुद्धा राक्षसीभिः सुरक्षिता ॥ एकवेणीधरा दीना त्वयि चिंतापरायणा ॥१३॥ अधःशय्या विवर्णांगी पद्मिनीव हिमागमे ॥ रावणाद्विनिवृत्तार्था मर्तव्यकृतनिश्चया ॥ देवी कथंचित्काकुत्स्थ त्वन्मना मार्गिता मया ॥ १४ ॥ इक्ष्वाकुवंशविख्यातिं शनैः कीर्तयतानघ ॥ सा मया नरशार्दूल शनैर्विश्वासिता तदा ॥ १५ ॥ ततः संभाषिता देवी सर्वमर्थं च दर्शिता ॥ रामसुग्रीवसख्यं च श्रुत्वा हर्षमुपागता ॥१६॥ नियतः समुदाचारो भक्तिश्चास्याः सदा त्वयि ॥ १७ ॥ एवं मया महाभाग दृष्टा जनकनंदिनी ॥ उग्रेण तपसा युक्ता त्वद्भक्त्या पुरुषर्षभ ॥ १८ ॥ अभिज्ञानं च मे दत्तं यथावृत्तं

तवांतिके ॥ चित्रकूटे महाप्राज्ञ वायसं प्रति राघव ॥१९॥ विज्ञाप्यः पुनरप्येष रामो वायुसुत त्वया ॥ अखिलेन यथादृष्टमिति मामाह जानकी ॥ २० ॥ इदं चास्मै प्रदातव्यं यत्नात्सुपरिरक्षितम् ॥ मणिरत्नं कपिश्रेष्ठ शिरोभूषणमुत्तमम् ॥ ब्रुवता वचनान्येवं सुग्रीवस्योपशृण्वतः ॥ २१ ॥ मनःशिलायास्तिलको गंडपार्श्वे निवेशितः ॥ एष निर्यातितः श्रीमान्मया ते वारिसंभवः ॥ एनं दृष्ट्वा प्रमोदिष्ये व्यसने त्वामिवानघ ॥२२॥ जीवितं धारयिष्यामि मासं दशरथात्मज ॥ ऊर्ध्वं मासान्न जीवेयं रक्षसां वशमागता ॥ २३ ॥ इति मामब्रवीत्सीता कृशांगी धर्मचारिणी ॥ रावणांतःपुरे रुद्धा मृगीवोत्फुल्ललोचना ॥ २४ ॥ एतदेव मयाख्यातं सर्वं राघव यद्यथा ॥ सर्वथा सागरजले संतारः प्रविधीयताम् ॥ २५ ॥ तौ जाताश्वासौ राजपुत्रौ विदित्वा तच्चाभिज्ञानं राघवाय प्रदाय ॥ देव्या चाख्यातं सर्वमेवानुपूर्व्याद्वाचा संपूर्णं वायुपुत्रः शशंस ॥२६॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुंदरकांडे पंचषष्टितमः सर्गः ॥ ६५ ॥

## षट्षष्टितमः सर्गः ६६

एवमुक्तो हनुमता रामो दशरथात्मजः ॥ तं मणिं हृदये कृत्वा रुरोद सहलक्ष्मणः ॥१॥ तं तु दृष्ट्वा मणिश्रेष्ठं राघवः शोककर्शितः ॥ नेत्राभ्यामश्रुपूर्णाभ्यां सुग्रीवमिदमब्रवीत् ॥ २ ॥ यथैव धेनुः स्रवति स्नेहाद्वत्सस्य वत्सला ॥ तथा ममापि हृदयं मणिश्रेष्ठस्य दर्शनात् ॥ ३ ॥ मणिरत्नमिदं दत्तं वैदेह्याः श्वशुरेण मे ॥ वधूकाले यथा बद्धमधिकं मूर्ध्नि शोभते ॥४॥ अयं हि जलसंभूतो मणिः प्रवरपूजितः ॥ यज्ञे परमतुष्टेन दत्तः शक्रेण धीमता ॥ ५ ॥ इमं दृष्ट्वा मणिश्रेष्ठं तथा तातस्य दर्शनम् ॥ अद्यास्म्यवगतः सौम्य वैदेहस्य तथा विभोः ॥६॥ अयं हि शोभते तस्याः प्रियाया मूर्ध्नि मे मणिः ॥ अद्यास्य दर्शनेनाहं प्राप्तां तामिव चिंतये ॥ ७ ॥ किमाह सीता वैदेही ब्रूहि सौम्य पुनःपुनः ॥ परासुमिव तोयेन सिंचंती वाक्यवारिणा ॥८॥ इतस्तु किं दुःखतरं यदिमं वारिसंभवम् ॥ मणिं

पश्यामि सौमित्रे वैदेहीमागतं विना ॥ ९ ॥ चिरं जीवति वैदेही यदि मासं धरिष्यति ॥ क्षणं वीर न जीवेयं विना तामसितेक्षणाम् ॥ १० ॥ नय मामपि तं देशं यत्र दृष्टा मम प्रिया ॥ न तिष्ठेयं क्षणमपि प्रवृत्तिमुपलभ्य च ॥ ११ ॥ कथं सा मम सुश्रोणी भीरुभीरुः सती तदा ॥ भयावहानां घोराणां मध्ये तिष्ठति रक्षसाम् ॥ १२ ॥ शारदस्तिमिरोन्मुक्तो नूनं चंद्र इवांबुदैः ॥ आवृतो वदनं तस्या न विराजति राक्षसैः ॥ १३ ॥ किमाह सीता हनुमंस्तत्त्वतः कथयस्व मे ॥ एतेन खलु जीविष्ये भेषजेनातुरो यथा ॥ १४ ॥ मधुरा मधुरालापा किमाह मम भामिनी ॥ मद्विहीना वरारोहा हनूमन्कथयस्व मे ॥ दुःखादुःखतरं प्राप्य कथं जीवति जानकी ॥ १५ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुंदरकांडे षट्षष्टितमः सर्गः ॥ ६६ ॥

## सप्तषष्टितमः सर्गः ६७

एवमुक्तस्तु हनुमान् राघवेन महात्मना ॥ सीताया भाषितं सर्वं न्यवेदयत राघवे ॥ १ ॥ इदमुक्तवती देवी जानकी पुरुषर्षभ ॥ पूर्ववृत्तमभिज्ञानं चित्रकूटे यथातथम् ॥ २ ॥ सुखसुप्ता त्वया सार्धं जानकी पूर्वमुत्थिता ॥ वायसः सहसोत्पत्य विरराद स्तनांतरम् ॥ ३ ॥ पर्यायेण च सुप्तस्त्वं देव्यंके भरताग्रज ॥ पुनश्च किल पक्षी स देव्या जनयति व्यथाम् ॥ ४ ॥ ततः पुनरुपागम्य विरराद भृशं किल ॥ ततस्त्वं बोधितस्तस्याः शोणितेन समुक्षितः ॥ ५ ॥ वायसेन च तेनैव सततं बाध्यमानया ॥ बोधितः किल देव्या त्वं सुखसुप्तः परंतप ॥ ६ ॥ तां च दृष्ट्वा महाबाहो दारितां च स्तनांतरे ॥ आशीविष इव क्रुद्धस्ततो वाक्यं त्वमूचिवान् ॥ ७ ॥ नखाग्रैः केन ते भीरु दारितं वै स्तनांतरम् ॥ कः क्रीडति सरोषेण पंचवक्त्रेण भोगिना ॥ ८ ॥ निरीक्षमाणः सहसा वायसं

समुद्वैक्षथाः ॥ नखैः सरुधिरैस्तीक्ष्णैस्तामेवाभिमुखं स्थितम् ॥ ९ ॥ सुतः किल स शक्रस्य वायसः पततां वरः ॥ धरांतरगतः शीघ्रं पवनस्य गतौ समः ॥१०॥ ततस्तस्मिन्महाबाहो कोपसंवर्तितेक्षणः ॥ वायसे त्वं व्यधाः क्रूरां मतिं मतिमतां वर ॥ ११ ॥ स दर्भसंस्तराद्गृह्य ब्रह्मास्त्रेण न्ययोजयः ॥ स दीप्त इव कालाग्निर्जज्वालाभिमुखं खगम् ॥ १२ ॥ स त्वं प्रदीप्तं चिक्षेप दर्भं तं वायसं प्रति ॥ ततस्तु वायसं दीप्तः स दर्भोऽनुजगाम ह ॥ १३ ॥ भीतैश्च संपरित्यक्तः सुरैः सर्वैश्च वायसः ॥ त्रींल्लोकान्संपरिक्रम्य त्रातारं नाधिगच्छति ॥१४॥ पुनरप्यागतस्तत्र त्वत्सकाशमरिंदम ॥ त्वं तं निपतितं भूमौ शरण्यः शरणागतम् ॥ वधार्हमपि काकुत्स्थ कृपया परिपालयः ॥ १५ ॥ मोघमस्त्रं न शक्यं तु कर्तुमित्येव राघव ॥ ततस्तस्याक्षि काकस्य हिनस्ति स्म स दक्षिणम् ॥१६॥ वायसस्त्वां नमस्कृत्य राज्ञो दशरथस्य च ॥ विसृष्टस्तु तदा काकः प्रतिपेदे स्वमालयम् ॥ १७ ॥ एवमस्त्रविदां श्रेष्ठः सत्त्ववाञ्छीलवानपि ॥ किमर्थमस्त्रं रक्षस्सु न

योजयसि राघव ॥ १८ ॥ न दानवा न गंधर्वा नासुरा न मरुद्गणाः ॥ तव राम रणे शक्तास्तथा प्रतिसमासितुम् ॥ १९ ॥ तव वीर्यवतः कच्चिन्मयि यद्यस्ति संभ्रमः ॥ क्षिप्रं सुनियतैर्बाणैर्हन्यतां युधि रावणः ॥ २० ॥ भ्रातुरादेशमाज्ञाय लक्ष्मणो वा परंतपः ॥ स किमर्थं नरवरो न मां रक्षति राघवः ॥ २१ ॥ शक्तौ तौ पुरुषव्याघ्रौ वाय्वग्निसमतेजसौ ॥ सुराणामपि दुर्धर्षौ किमर्थं मामुपेक्षतः ॥ २२ ॥ ममैव दुष्कृतं किंचिन्महदस्ति न संशयः ॥ समर्थौ सहितौ यन्मां न रक्षेते परंतपौ ॥ २३ ॥ वैदेह्या वचनं श्रुत्वा करुणं साश्रु भाषितम् ॥ पुनरप्यहमार्यां तामिदं वचनमब्रुवम् ॥ २४ ॥ त्वच्छोकविमुखो रामो देवि सत्येन ते शपे ॥ रामे दुःखाभिभूते च लक्ष्मणः परितप्यते ॥ २५ ॥ कथंचिद्भवती दृष्टा न कालः परिशोचितुम् ॥ इदं मुहूर्तं दुःखानामंतं द्रक्ष्यसि भामिनि ॥ २६ ॥ तावुभौ नरशार्दूलौ राजपुत्रौ परंतपौ ॥ त्वद्दर्शनकृतोत्साहौ लंकां भस्मीकरिष्यतः ॥ २७ ॥ हत्वा च समरे रौद्रं रावणं सहबांधवम् ॥ राघवस्त्वां वरारोहे

स्वपुरीं नयिता ध्रुवम् ॥ २८ ॥ यत्तु रामो विजानीयादभिज्ञानमनिंदिते ॥ प्रीति-संजननं तस्य प्रदातुं तं त्वमर्हसि ॥ २९ ॥ साभिवीक्ष्य दिशः सर्वा वेण्युद्ग्रथन-मुत्तमम् ॥ मुक्त्वा वस्त्राद्ददौ मह्यं मणिमेतं महाबल ॥ ३० ॥ प्रतिगृह्य मणिं दोर्भ्यां तव हेतो रघुप्रिय ॥ शिरसा संप्रणम्यैनामहमागमने त्वरे ॥ ३१ ॥ गमने च कृतोत्साहमवेक्ष्य वरवर्णिनी ॥ विवर्धमानं च हि मामुवाच जनकात्मजा ॥ ३२ ॥ अश्रुपूर्णमुखी दीना बाष्पगद्गदभाषिणी ॥ ममोत्पतनसंभ्रांता शोकवेग-समाहता ॥ ३३ ॥ हनुमन्सिंहसंकाशौ तावुभौ रामलक्ष्मणौ ॥ सुग्रीवं च सहा-मात्यं सर्वान्ब्रूया अनामयम् ॥ ३४ ॥ यथा च स महाबाहुर्मां तारयति राघवः ॥ अस्माद्दुःखांबुसंरोधात्त्वं समाधातुमर्हसि ॥ ३५ ॥ इमं च तीव्रं मम शोकवेगं रक्षोभिरेभिः परिभर्त्सनं च ॥ ब्रूयास्तु रामस्य गतः समीपं शिवश्च तेऽध्वास्तु हरिप्रवीर ॥ ३६ ॥ एतत्तवार्या नृपराजसिंह सीता वचः प्राह विषादपूर्वम् ॥

एतच्च बुद्ध्वा गदितो यथा त्वं श्रद्धत्स्व सीतां कुशलां समग्राम् ॥ ३७ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये सुंदरकांडे सप्तषष्टितमः सर्गः ॥ ६७ ॥

## अष्टषष्टितमः सर्गः ६८

अथाहमुत्तरं देव्या पुनरुक्तः ससंभ्रमम् ॥ तव स्नेहान्नरव्याघ्रौ सौहार्दादनुमान्य च ॥१॥ एवं बहुविधं वाच्यो रामो दाशरथिस्त्वया ॥ यथा मां प्राप्नुयाच्छीघ्रं हत्वा रावणमाहवे ॥ २ ॥ यदि वा मन्यसे वीर वसैकाहमरिंदम ॥ कस्मिंश्चित्संवृते देशे विश्रांतः श्वो गमिष्यसि ॥ ३ ॥ मम चाप्यल्पभाग्यायाः सान्निध्यात्तव वानर ॥ अस्य शोकविपाकस्य मुहूर्तं स्याद्विमोक्षणम् ॥ ४ ॥ गते हि त्वयि विक्रान्ते पुनरागमनाय वै ॥ प्राणानामपि संदेहो मम स्यान्नात्र संशयः

॥ ५ ॥ तवादर्शनजं चापि भयं मां परितापयेत् ॥ दुःखाद्दुःखपराभूतां दुर्गतां दुःखभागिनीम् ॥ ६ ॥ अयं च वीर संदेहस्तिष्ठतीव ममाग्रतः ॥ सुमहांस्त्वत्सहायेषु हर्यृक्षेषु असंशयः ॥ ७ ॥ कथं नु खलु दुष्पारं तरिष्यति महोदधिम् ॥ तानि हर्यृक्षसैन्यानि तौ वा नरवरात्मजौ ॥८॥ त्रयाणामेव भूतानां सागरस्येह लंघने ॥ शक्तिः स्याद्वैनतेयस्य वायोर्वा तव चानघ ॥ ९ ॥ तदस्मिन्कार्यनियोगे वीरैवं दुरतिक्रमे ॥ किं पश्यसि समाधानं ब्रूहि कार्यविदां वर ॥१०॥ काममस्य त्वमेवैकः कार्यस्य परिसाधने ॥ पर्याप्तः परवीरघ्न यशस्यस्ते फलोदयः ॥ ११ ॥ बलैः समग्रैर्यदि मां हत्वा रावणमाहवे ॥ विजयी स्वपुरीं रामो नयेत्तत्स्याद्यशस्करम् ॥१२॥ यथाऽयं तस्य वीरस्य वनादुपधिना हृता ॥ रक्षसा तद्भयादेव तथा नार्हति राघवः ॥ १३ ॥ बलैस्तु संकुलां कृत्वा लंकां परबलार्दनः ॥ मां नयेद्यदि काकुत्स्थस्तत्तस्य सदृशं भवेत् ॥ १४ ॥ तद्यथा तस्य विक्रांतमनुरूपं

महात्मनः ॥ भवत्याहवशूरस्य तथा त्वमुपपादय ॥ १५ ॥ तदर्थोपहितं वाक्यं प्रश्रितं हेतुसंहितम् ॥ निशम्याहं ततः शेषं वाक्यमुत्तरमब्रुवम् ॥ १६ ॥ देवि हर्यृक्षसैन्यानामीश्वरः प्लवतां वरः ॥ सुग्रीवः सत्त्वसंपन्नस्त्वदर्थे कृतनिश्चयः ॥ १७ ॥ तस्य विक्रमसंपन्नाः सत्त्ववंतो महाबलाः ॥ मनःसंकल्पसंपाता निदेशे हरयः स्थिताः ॥ १८ ॥ येषां नोपरि नाधस्तान्न तिर्यक्सज्जते गतिः ॥ न च कर्मसु सीदंति महत्स्वमिततेजसः ॥१९॥ असकृत्तैर्महाभागैर्वानरैर्बलसंयुतैः ॥ प्रदक्षिणीकृता भूमिर्वायुमार्गानुसारिभिः ॥ २० ॥ मद्विशिष्टाश्च तुल्याश्च संति तत्र वनौकसः ॥ मत्तः प्रत्यवरः कश्चिन्नास्ति सुग्रीवसंनिधौ ॥ २१ ॥ अहं ताव-दिह प्राप्तः किं पुनस्ते महाबलाः ॥ नहि प्रकृष्टाः प्रेष्यंते प्रेष्यंते हीतरे जनाः ॥ २२ ॥ तदलं परितापेन देवि मन्युरपैतु ते ॥ एकोत्पातेन ते लंकामेष्यंति हरि-यूथपाः ॥ २३ ॥ मम पृष्ठगतौ तौ च चंद्रसूर्याविवोदितौ ॥ त्वत्सकाशं महाभागे नृसिंहावागमिष्यतः ॥ २४ ॥ अरिघ्नं सिंहसंकाशं क्षिप्रं द्रक्ष्यसि राघवम् ॥

लक्ष्मणं च धनुष्मन्तं लंकाद्वारमुपागतम् ॥ २५ ॥ नखदंष्ट्रायुधान्वीरान्सिंहशार्दूलविक्रमान् ॥ वानरान्वारणेन्द्राभान्क्षिप्रं द्रक्ष्यसि संगतान् ॥ २६ ॥ शैलांबुदनिकाशानां लंकामलयसानुषु ॥ नर्दतां कपिमुख्यानां न चिराच्छ्रोष्यसि स्वनम् ॥ २७ ॥ निवृत्तवनवासं च त्वया सार्धमरिंदमम् ॥ अभिषिक्तमयोध्यायां क्षिप्रं द्रक्ष्यसि राघवम् ॥ २८ ॥ ततो मया वाग्भिरदीनभाषिणा शिवाभिरिष्टाभिरभिप्रसादिता ॥ उवाह शांतिं मम मैथिलात्मजा तवापि शोकेन तथातिपीडिता ॥ २९ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये चतुर्विंशतिसाहस्र्यां सुन्दरकांडेऽष्टषष्टितमः सर्गः ॥ ६८ ॥

॥ इति वाल्मीकीयः सुंदरकांडः समाप्तः ॥